हरिदास संस्कृत ग्रन्थमाला-९७

नीति-शृङ्गार-वैराग्य-त्रयसंवलितं

# भर्तृहरिशतकत्रयम्

( गद्य-पद्यात्मक-व्याख्योपेतम् )

( नीतिशतकम् = संस्कृत हिन्दीव्याख्यायुतं, शृङ्गार-वैराग्य-शतकद्वयं तु गद्य पद्यात्मक-हिन्दीव्याख्योपेतम् )







चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

HARIDAS SANSKRIT SERIES
97

—०—

# NĪTISATAKAM

OF

SHRĪ BHARTRIHARI

श्रीभर्तृहरिविरचितं

# नीतिशतकम्

'ललिता' 'बाला' संस्कृत-हिन्दीव्याख्योपेतम्

संस्कृतव्याख्याकारः—

साहित्याचार्यः श्रीमदनन्तरामशास्त्री वेतालः

हिन्दीव्याख्याकारः—

पण्डित श्री विजयशङ्करमिश्र, एम. ए.



CHOWKHAMBA SANSKRIT SERIES OFFICE

VARANASI–221001 ( India )

1994

प्रकाशक : चौखम्बा संस्कृत सीरीज आफिस, वाराणसी
मुद्रक : चौखम्बा प्रेस, वाराणसी
संस्करण : चतुर्दश, वि० सं० २०५१
मूल्य : रू० १२-५०



के. ३७/९९, गोपाल मन्दिर लेन
पो० बा० १००८, वाराणसी-२२१००१ ( भारत )
फोन : आफिस : ३३३४५८
निवास : ३३४०३२

अपरञ्च प्राप्तिस्थानम्

कृष्णदास अकादमी

पो० बा० नं० १११८
चौक, ( चित्रा सिनेमा बिल्डिंग ), वाराणसी-२२१००१
( भारत )
फोन : ३१२३९८

## किञ्चित्प्रास्ताविकम्

श्रीमद्भर्तृहरियोगीन्द्रविरचितस्यास्य ग्रन्थस्य टीका नाद्या-वधि क्वापि तादृशी समुपलब्धा, यया विद्यार्थिनां परीक्षासु यथावदुपकारो भविता। अतश्च कारणाद् शतकस्यास्य टीका-मन्वयकोषव्याकरणभावार्थप्रदर्शनपुरःसरं देववाण्यां विरचयितुं प्रवृत्तोऽभवम्। तदानीमेव कार्यवशादुपस्थितैः सुहृद्वरश्रीविजय-शङ्करमिश्र एम० ए० महोदयैरपि कार्येऽस्मिन् स्वीय उत्साहः प्रदर्शितः। ततस्तदनुसारं तैर्हिन्दीभाषाटीकालेखनमप्युपक्रान्तम्। प्रारब्धे च मुद्रणकार्ये दिवानिशं परिश्रम्य परमेश्वरस्य करुणया निर्विघ्नं कार्यमिदमावाभ्यां सत्वरं पूर्णतां नीतम्।

अत्र किल तदिदं पुस्तकं विद्यार्थिनां पुरस्तादुपस्थितम्। अनया च टीकया तेषां कीदृगुपकारो भविष्यतीत्यत्र तु न मया वक्तव्यं किञ्चित्। पुस्तकदर्शनान्नूनं स्वानुभवेनैव ते ज्ञास्यन्ति सर्वम्।

'विद्यार्थिनां प्रवेशोऽत्र सौकर्येण कथं स्यादि'त्येतन्मनसि-कृत्यैव कार्यमिदं विरचितम्। अनया च टीकया यदि ते किमपि परीक्षायां साहाय्यमधिगमिष्यन्ति तर्हि नूनं प्रयासोऽयं मदीयः सफलः स्यादित्यलं पल्लवितेन।

अनन्तरामशास्त्री वेतालः

# श्लोकानुक्रमणिका

॥ श्रीः ॥

# नीतिशतकम्

## 'ललिता' 'बाला' संस्कृत-हिन्दीव्याख्योपेतम्

दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये ।
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥ १ ॥

श्रीमत्सुखैकहेतुं सेतुं संसारसागरोत्तरणे ।
अरुणं जगदाधारं ललिताकारं महो मुहुर्वन्दे ॥

श्रीमद्गुरुवरचरणाम्भोजद्वितयीं च सादरं नत्वा ।
वितनोमि नीतिशतके 'ललिता'ख्यां मुग्धबोधिनी व्याख्याम् ।

तत्रभवान् सर्वतन्त्रस्वतन्त्रो महायोगीश्वरो मनीषिप्रवरः पार्थिवेन्द्रः श्रीमान् भर्तृहरिः केनापि कारणविशेषेण संसाराद्विरक्तो लोकानां कर्तव्यं, हेयत्वसूचिकां घृणास्पदं भोगसम्पदं, शमसुखं चोपदेष्टुमिच्छन् सुभाषितत्रिशतीं नाम नीतिशृङ्गारवैराग्यवर्णनपरं पद्यमयं कञ्चित्प्रबन्धं निर्मातुं प्रवृत्तः प्रथमं नीतिशतकं प्रस्तुवन् शिष्टाचारपम्परामनुसृत्य ग्रन्थादौ निर्गुणब्रह्मनमस्कारात्मकं मङ्गलमाचरति—दिक्कालादिति ।

अन्वयः—दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये, स्वानुभूत्येकमानाय शान्ताय तेजसे नमः ( अस्तु ) ।

व्याख्या—दिक्कालादीति । दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये; दिशः = प्राच्यादयः कालाः = भूतादयः ते आदौ येषां तैर्दिक्कालादिभिः, आदिपदेन घटपटादिकं वस्तुजातमाकाशादिकं च गृह्यते, अनवच्छिन्ना = अपरिमिता असङ्कुचिता, अनन्ता = अविनाशिनी, चिदेव चिन्मात्रम् = ज्ञानमयी, मूर्तिः = स्वरूपं यस्य तत् तस्मै । अत्र 'तेजसे' इति नपुंसकलिङ्गं विशेष्यमनुसृत्य = 'चिन्मात्रमूर्तिने' इति प्रयोगः कर्तव्य आसीत्, किन्तु महर्षिकल्पस्य श्रीमद्भर्तृहरेरमुं प्रयोगमार्षं मत्वा कवेर्निरङ्कुशत्वं वा प्रकल्प्य विज्ञवरैरपशब्दोऽयमु-

पेक्षणीयः। अथवा, केवलस्य मूर्तिशब्दस्य भाषितपुंस्कत्वाभावेऽपि विशिष्टस्य तस्य भाषितपुंस्कत्वात् 'तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य' इत्यनेन कृतं पुंवद्भावमालम्ब्य कथञ्चित् प्रयोगाऽयमुपपादनीयः। किञ्च—'तेजसे' इत्यत्र 'वेधसे' इत्यपि पाठः स्मर्यते। तत्र वेधः पदेन निर्गुणो व्यापको विष्णुर्ग्राह्यः। विष्णौ च सर्वाणि विशेषणानि योजयितुं शक्यानि। अत्र पाठे सर्वे समीचीनमेव, न काप्यनुपपत्तिः विशेषणानामर्थानुकूल्यं च कथञ्चिद्भवत्येवेति। स्वानुभूत्येकमानाय, स्वा स्वस्य वा अनुभूतिः = अनुभवः एकम् = केवलं मानम् = प्रमाणं यत्र तत् तादृशाय, शान्ताय = सर्वविघ्नविकारोपद्रवरहिताय प्रसन्नाय, तेजसे = प्रकाशरूपाय निर्गुणाय, परस्मै ब्रह्मणे, 'नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च' इत्यनेन सूत्रेण नमः–शब्दयोगे चतुर्थी, नमः = नमस्कारोऽस्तु। अनुष्टुप्छन्दः।

भावार्थः – यस्य परब्रह्मणः स्वरूपं सर्वत्र देशे काले वस्तुन्याकाशादौ च व्याप्तम् अविनाशि तथा ज्ञानमयं वर्तते यस्य सत्तायामुपलब्धौ च स्वात्मानुभव एव केवलं प्रमाणम्, विकारशून्यं तत् परं ब्रह्माऽहं प्रणतोऽस्मीति।।[1]

जिससे सदा प्रवाहित कविता सरिता तरङ्गवाली है।
उस विभु की करुणामय विभुता नव नव विलास दिखलावै ॥ १ ॥
जिनकी कविता-लतिका, सुमनस-निर्यासमाधवीहाला।
मत्त बनाती मन को, उन गुरुवर का प्रसाद हो जन पर ॥ २ ॥
स्नेहसुधारससागर वाणीनागर सुकीर्ति के आगर।
तातचरण की धूली मनदर्पण को सदा करे निर्मल ॥ ३ ॥
बिहार के सरकारी विद्यालय की प्रथम परीक्षा में।
रक्खी गई यही फिर, इस वत्सर में प्रभूत गुणवाली ॥ ४ ॥
नृपयतिनीतिशती जो, उसकी टीका विराजती 'बाला'।
अन्तेवासिजनों के मन में निश्चल उदार पद पावे ॥ ५ ॥

---

१. एतन्मङ्गलपद्यादनन्तरं क्वचित्पुस्तके—
'यां चिन्तयामि सततं मयि सा विरक्ता साऽप्यन्यमिच्छति जनं स जनोऽन्यसक्तः। अस्मत्कृते च परितुष्यति काचिदन्या धिक् तां च तं च मदनं च इमां च मां च' ॥ इति श्लोक उपलभ्यते।
विलक्षणोऽयं श्लोको नीतिशतके प्रसङ्गोचितो नास्तीत्यस्माभिरुपेक्षितः।

भाषा—दिशाओं ( पूर्व, पश्चिम आदि ) और काल ( भूत, वर्तमान तथा भविष्यत् ), आदि से अपरिमित, अविनाशी तथा ज्ञानमयमूर्तिवाले, आत्मानुभव ही जिसकी सत्ता का प्रमाण है, ऐसे शान्तिमय तेजःस्वरूप ब्रह्म को नमस्कार है ॥ १ ॥

इदानीं दुर्दैवात् सुभाषितवचनस्यावसरो नास्ती'ति प्रतिपादयति—

बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः ।
अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥ २ ॥

अन्वयः—बोद्धारः मत्सरग्रस्ताः, प्रभवः स्मयदूषिताः अन्ये च अबोधोपहताः ( सन्ति, अतः ) सुभाषितम् अङ्गे जीर्णम् ।

व्याख्या—बोद्धार इति । बोद्धारः = अर्थज्ञाः; विद्वांसः, मत्सरग्रस्ताः, मत्सरेण = अन्यशुभद्वेषेण ईर्ष्ययेति यावत्, 'मत्सरोऽन्यशुभद्वेषः' इत्यमरः ग्रस्ताः = आक्रान्ताः, प्रभवः = कवित्वस्य यथोचितमादरं कर्तुं समर्था राजानः, स्मयदूषिताः, स्मयेन = गर्वेण दूषिताः = मलिनाः मानसं विकारं प्राप्ता दर्पान्धा इति यावत्, अन्ये च पूर्वोक्तद्वयादितरे सर्वे जनाः, अबोधोपहताः, अबोधेन = अज्ञानेन उपहताः = नष्टा आक्रान्ताः सन्ति, अतो हेतोः सुभाषितम् = प्रसङ्गोचितं सुन्दरं वचनम् । अङ्गे = वक्तुः शरीरे, जीर्णम् = परिणतम् । अनुष्टुप्छन्दः ।

भावार्थः—'अस्मिन् समये गुणग्राहिणः प्रायो न सन्ती'ति सुभाषितवचनं वक्तुर्मुखाभ्यन्तर एव वर्तमानं बहिर्विकासं न प्राप्तुमर्हतीति ।

भाषा—जानकार लोग ईर्ष्याग्रस्त तथा राजा लोग गर्व से भरे हैं और दूसरे लोग अज्ञान से दबे हुए हैं । इसलिये सुभाषित ( सुन्दर वाणी ) शरीर के भीतर ही गल-पच गया ॥ २ ॥

'अज्ञानं विशिष्टं ज्ञानं चेत्युभयमपि सम्यक्, किन्तु साधारणं ज्ञानमतिभयङ्कर'मित्याह—

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्माऽपि तं नरं न रञ्जयति ॥ ३ ॥

अन्वयः—अज्ञः सुखम् आराध्यः विशेषज्ञः सुखतरम् आराध्यते, ( किन्तु ) ज्ञानलवदुर्विदग्धं तं नरं ब्रह्माऽपि न रञ्जयति ।

व्याख्या—अज्ञ इति । अज्ञः = मूर्खः, सुखम् = अनायासं यथा स्यात्तथा,

आराध्यः = प्रसादनीयः, विशेषज्ञः = अधिकज्ञानशाली जनः, सुखतरम् = अतिसौकर्येण प्रयत्नं विनैवेति यावत्, आराध्यते = प्रसाद्यते, किन्तु ज्ञानलवदुर्विदग्धम्, ज्ञानस्य लवेन = अतिस्वल्पेन ज्ञानेन, दुर्विदग्धः = आत्मनं निपुणं पण्डितं मन्यमानः वस्तुतो नैतादृशः तम्, नरम् = मनुष्यम्, ब्रह्मापि = ब्रह्मदेवोऽपि, न रञ्जयति = न प्रसादयति । आर्याछन्दः ।

भावार्थः—मूर्खः पण्डितप्रवरश्चेत्युभावपि लोके प्रसादयितुं शक्यौ, परन्तु किञ्चिज्ज्ञस्य दुराग्रहैः ग्रस्तस्य पुरुषस्य प्रसादनं ब्रह्मणाऽपि न कर्तुं शक्यते किमुताऽन्यैरिति ।

भाषा—अनजान आदमी आसानी से मनाया जा सकता है। विशेषरूप से जानकार आदमी तो उससे भी अधिक आसानी से मनाया जा सकता है। किन्तु थोड़ा ज्ञान पाकर निपुण बननेवाले मनुष्य को ब्रह्मा भी नहीं मना सकते ॥ ३ ॥

इदानीं 'मूर्खस्य चेतसः परितोषणं सर्वथा दुष्करं दुःखसम्भवं चे'ति क्रमेण श्लोकद्वयेन प्रतिपादयति—

प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्रान्तरात्
समुद्रमपि सन्तरेत् प्रचलदूर्मिमालाऽऽकुलम् ।
भुजङ्गमपि कोपितं शिरसि पुष्पवद् धारयेत्
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ४ ॥

अन्वयः—( जनः ) मकरवक्त्रदंष्ट्रान्तरात् प्रसह्य मणिम् उद्धरेत्, प्रचलदूर्मिमालाऽऽकुलं समुद्रम् अपि सन्तरेत्, कोपितं भुजङ्गम् अपि पुष्पवत् शिरसि धारयेत्-प्रतिनिविष्टमूर्खजनचित्तं तु न आराधयेत् ।

व्याख्या—प्रसह्येति । जनः, मकरवक्त्रद्रंष्ट्रान्तरात्, मकरस्य = जलजन्तुविशेषस्य वक्त्रे मुखे या दंष्ट्राः तासाम् अन्तरात् = मध्यभागात् प्रसह्य = हठात् । मणिम् = रत्नम्, उद्धरेत् = बहिर्निष्कासयितुं शक्नुयात्, प्रचलदूर्मिमालाऽऽकुलम्, प्रचलन्त्याः = इतस्ततः प्रसरन्त्या ऊर्मीणाम् = तरङ्गाणाम्, 'भङ्गस्तरङ्ग ऊर्मिर्वा' इत्यमरः, मालया = पंक्त्या, आकुलम् = व्याप्तम्, समुद्रम् = सागरम् अपि, सन्तरेत् = तीर्त्वा समुल्लङ्घयितुं समर्थो भवेत्, कोपितम् = क्रोधवशं नीतम्, भुजङ्गमपि = सर्पमपि, 'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः' इत्यमरः, पुष्पवत् = कुसुमेन तुल्यम्, 'तेन तुल्यं क्रिया

चेद् वतिः; इत्यनेन वतिप्रत्ययः, शिरसि = मस्तके, धारयेत् = स्थापयितुं शक्नुयात्, प्रतिनिविष्टमूर्खजनचित्तम्, प्रतिनिविष्टः = दुराग्रहविशेषैः ग्रस्तः स चासौ मूर्खजनः जडबुद्धिर्मनुष्यः तस्य चित्तम् = मनः, 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः, तु = पुनः, न आराधयेत् = न सन्तोषयितुं प्रभवेत् । पृथ्वीवृत्तम् ।

भावार्थः—मकरमुखे स्थितस्य रत्नस्य बहिर्निष्कासनं, तरङ्गाकुलस्य समुद्रस्य सन्तरणं, मस्तके सर्पस्य धारणं चेत्यतिदुष्करमपि कार्यं कदाचित् साहसविशिष्टः पुरुषः कर्तुं शक्नुयात् किन्तु दुराग्रहग्रस्तानां मूर्खाणां चेतसोऽनुरञ्जनं कष्टेन सम्भवतीति ।

भाषा—मनुष्य घड़ियाल के मुख की डाढ़ों के बीच से मणि को बलपूर्वक निकाल सकता है, उठती हुई तरङ्गों से व्याप्त समुद्र को भी पार कर सकता है तथा क्रोधित किये हुए (छेड़े हुए) साँप को भी सिर पर फूल की भाँति धारण कर सकता है, किन्तु हठी मूर्खों के चित्त को नहीं मना सकता ॥ ४॥

लभेत सिकतासु तैलमपि यत्नतः पीडयन्
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ।
कदाचिदपि पर्यटञ्छशविषाणमासादयेत्
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ५ ॥

अन्वयः—( जनः ) यत्नतः पीडयन् सिकतासु अपि तैलं लभेत, पिपासार्दितः च सन् मृगतृष्णिकासु सलिलं पिबेत्, पर्यटन्, कदाचित् शशविषाणम् अपि आसादयेत्, प्रतिनिविष्टमूर्खजनचित्तं तु न आराधयेत् ।

व्याख्या—लभेतेति । जनः यत्नतः = परिश्रमपूर्वकम्, पीडयन् = मर्दयन्, सिकतास्वपि = बालुकायामपि, सिकताशब्दो बहुत्व एव प्रयुज्यते; तैलम् = तदन्तर्गतं सारभूतं स्नेहम् लभेत् = प्राप्तुं शक्नुयात्, पिपासार्दितः = तृष्णया पीडितश्च सन्, मृगतृष्णिकासु = मरीचिकासु, मरुस्थले बालुकासु जलभ्रान्तिकरेष्वतिविस्तृतेषु प्रकाशविशेषेष्विति यावत्, सलिलम् = जलम्, पिबेत् = पातुं शक्नुयात्, पर्यटन् = इतस्ततो भ्रमन्, कदाचित् = कस्मिंश्चित् काले, शशविषाणमपि = शशकस्य शृङ्गमपि, आशादयेत् = हस्तगतं कर्तुं पारयेत्, 'प्रतिनिविष्टमूर्खजनचित्तं तु नाराधयेत्' इति शेषं पूर्ववद् व्याख्येयम् । पूर्वत्र

श्लोके चतुर्थचरणे अत्र च श्लोके प्रथमद्वितीयचतुर्थचरणेषु अष्टमाक्षरे विरामरूपो नियमो न स्वीकृतः कविना। यतिभङ्गदोषश्चायं पूर्वेषां छन्दःकाराणां मते नास्तीति। पृथ्वीवृत्तम्।

भावार्थः—बालुकायास्तैलं, मरुस्थले जलं शशस्य शृङ्गं चेत्यसम्भवमपि कदाचिद्दैवात्सम्भवेत्, किन्तु हठवृत्तेर्मूर्खस्य चेतसः प्रसादनं कदापि न सम्भवतीति। पूर्वस्मिन् श्लोके 'प्रसह्यः मणिमुद्धरेदि'त्यादिना, मूर्खजनचित्ताराधनं कष्टेन कर्तुं शक्यमिति, अस्मिन् प्रकृते श्लोके 'लभेत सिकतासु तैलमि'त्यादिना तत् सर्वथा कर्तुं न शक्यमिति च गूढं सूचितम्।

भाषा—मनुष्य परिश्रम के साथ पेरने पर बालू में भी तेल पा सकता है, प्यास से व्याकुल होने पर मृगतृष्णा में भी पानी पी सकता है और इधर-उधर घूमकर ढूँढने पर खरगोस का सींग भी पा सकता है, किन्तु हठी मूर्खों के चित्त को नहीं मना सकता ॥५॥

सन्मार्गे दुर्जनानां प्रवर्तनं बहुदुष्करमित्याह—

व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते
छेत्तुं वज्रमणिं शिरीषकुसुमप्रान्तेन सन्नह्यति।
माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते
नेतुं वाञ्छति यः खलान्पथि सतां सूक्तैः सुधास्यन्दिभिः ॥६॥

अन्वय—यः सुधास्यन्दिभिः सूक्तैः खलान् सतां पथि नेतुं वाञ्छति, असौ बालमृणालतन्तुभिः व्यालं रोद्धुं समुज्जृम्भते, शिरीषकुसुमप्रान्तेन वज्रमणिं छेत्तुं सन्नह्यति, मधुबिन्दुना क्षाराम्बुधेः माधुर्यं रचयितुम् ईहते।

व्याख्या—व्यालमिति। यः पुरुषः सुधास्यन्दिभिः = अमृतस्राविभिः, सूक्तैः = सुन्दरैर्वचनैः, खलान् = दुष्टान्, सतां = सज्जनानाम्, पथि = मार्गे, 'अयनं वर्त्ममार्गाध्वपन्थानः' इत्यमरः, नेतुम् = प्रापयितुम्, वाञ्छति, असौ = तथाभूतः पुरुषः, व्यालम् = दुष्टगजम्, 'व्यालो दुष्टगजे सर्पे' इति विश्वः, बालमृणालतन्तुभिः, बालस्य = कोमलस्य मृणालस्य = बिसस्य कमलमूलस्येति यावत्, 'मृणालं बिसमि'त्यमरः' तन्तवः = सूत्राणि तं, रोद्धुम् = बद्धुम्, समुज्जृम्भते = चेष्टते, शिरीषकुसुमप्रान्तेन = शिरीषनामकपुष्पस्याग्रभागेन वज्रमणिम् = हीरकं नाम रत्नविशेषम्, छेत्तुम् = द्विधा कर्तुम्, सन्नह्यति = उद्यतो भवति, मधुबिन्दुना, मधुनः = माक्षिकस्य, बिन्दुः = लेश इति यावत् तेन मधु

क्षौद्रं माक्षिकादि' इत्यमरः, क्षाराम्बुधेः = लवणसमुद्रस्य, माधुर्यम् = मधुरताम्, रचयितुम् = सम्पादयितुम्, ईहते = अभिलषति । शार्दूलविक्रीडितं छन्दः ।

भावार्थः—मधुराणि वचनानि प्रयुज्य दुर्जनेषु सज्जनत्वमारोपयितुं प्रवृत्तो मृणालतन्तुप्रभृतिभिः पदार्थैर्दुष्टगजबन्धनादिकमिव दुष्करं कार्यं कुर्वन् मन्दबुद्धिर्जनो लोकोपहासपात्रं भवतीति ।

भाषा—जो पुरुष अमृत टपकाने वाले ( मधुर ) वचनों से दुष्टों को सज्जनों के मार्ग पर लाना चाहता है वह कोमल कमलनाल के ( सूक्ष्म ) सूत्रों से दुष्ट हाथी को बाँधने की चेष्टा करता है, शिरीषपुष्प के अग्रभाग से हीरे को काटने के लिए तैयार होता है तथा एक बूंद शहद से खारे समुद्र में मिठास पैदा करना चाहता है ॥ ६ ॥

'मौनधारणेन मूर्खाः स्वीयं मूर्खत्वदोषमाच्छादयितुं शक्नुवन्ती'त्येतन्निरूपयति—

स्वायत्तमेकान्तगुणं विधात्रा विनिर्मितं छादनमज्ञतायाः ।
विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ॥७॥

अन्वयः—विधात्रा अपण्डितानां स्वायत्तम् एकान्तगुणं मौनम् अज्ञतायाः छादनं विनिर्मितम् । ( इदम् ) सर्वविदां समाजे विशेषतः विभूषणं भवति ।

व्याख्या—स्वायत्तमिति । विधात्रा = ब्रह्मणा, अपण्डितानाम् = मूर्खाणाम्, स्वायत्तम् = आत्माधीनम्, एकान्तगुणम् = एकान्तं गुणो यत्र तत्, नियमेन गुणकारि सफलमिति यावत्, 'एकान्तहितम्' इति पाठे--नियमेन हितकरणम् इत्यर्थः । मौनम् = तुष्णीभावाश्रयणम्, अज्ञतायाः = मूर्खतायाःछादनम् = आवरणरूपम्, विनिर्मितम् = कृतम्, इदं मौनतम्, सर्वविदाम् = बहुज्ञानां विदुषाम्, समाजे = समूहे, विशेषतः = अधिकरूपेण, विभूषणम् = अलङ्कारो भवति । उपजातिवृत्तम् ।

भावार्थः--मूर्खा यदि मौनमालम्ब्य तिष्ठेयुस्तर्हि तेषां मूर्खता कुतोऽपि न प्रकाशमागच्छेत्, विद्वन्मण्डले पुनर्मूर्खाणा मौनमधिकमुपकारकं भवतीति ।

भाषा--विधाता ने मूर्खों के लिये अपने हाथ में रहने वाले तथा नियम से ( सदा ) लाभ पहुँचाने वाले मौन को उनके अज्ञान का आवरणस्वरूप बनाया है । ( यह मौन ) ज्ञानियों के समाज में ( मूर्खों के लिये ) विशेषरूप से अलङ्कारस्वरूप हो जाता है ॥ ७ ॥

'अल्पज्ञता मनसि गर्वमुत्पादयति, विद्वज्जनसमागमेन च तद्गर्वापहारी भवती' त्याशयेनाह—

यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः।
यदा किञ्चित्किञ्चिद् बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥८॥

अन्वयः—यदा किञ्चिज्ज्ञः अहं द्विप इव मदान्धः समभवम्, तदा 'सर्वज्ञः अस्मि' इति मम मनः अवलिप्तम् अभवत्। यदा (मया) बुधजनसकाशात् किञ्चित् किञ्चिद् अवगतम्, तदा 'मूर्खः अस्मि' इति मे मदः ज्वर इव व्यपगतः।

व्याख्या—यदेति। यदा=यस्मिन् समये, किञ्चिज्ज्ञः 'अहम्' इति स्वात्मानमुद्दिश्य कवेरुक्तिः, द्विप इव=हस्ती यथा, 'दन्ती दन्तावली हस्ती द्विरदोऽनेकपो द्विपः' इत्यमरः, मदान्धः, मदेन=अभिमानेन (हस्तिपक्षे मदजलेन), अन्धः= विवेकशून्यः (हस्तिपक्षे मत्तः), समभवम् = सञ्जातः, तदा=तस्मिन् समये; सर्वज्ञः सकलपदार्थज्ञानसम्पन्नः अस्मि, इति=एवम्, मम=मे, मनः=चेतः, अवलिप्तम् = गर्वपूर्णम्, अभवत् = अजायत। यदा मया, बुधजनसकाशात् = विद्वज्जनेन सह समागमात्, किञ्चित्कञ्चिद्=अत्यल्पम्, अवगतम्=वास्तविकं ज्ञानमासादितम्, तदा मूर्खः = मूढो जडबुद्धिः अस्मि, इति = एवं प्रकारेण वर्तमानः मे=मम, मदः=गर्वः, ज्वर इव=व्याधिरूपः शारीरः उत्तापः इव, व्यपगतः=दूरेऽभवत्। शिखरिणीवृत्तम्।

भावार्थः—इतस्ततो ज्ञानलेशं मिथ्याभूतमासादयन् मनुष्यो गर्वपर्वतमारूढो भवति, परं पण्डितानां संसर्गेण क्रमेणोन्मीलितनेत्रः सन् तद्गर्वभारं स्वात्मनः शिरसोऽवतारयतीति।

भाषा—जब मैं अल्पज्ञ था और हाथी की भाँति मद से अन्धा हो गया था उस समय यह समझकर कि 'मैं सब जानता हूँ' मेरा मन गर्वयुक्त हो गया, (परन्तु) जब बुद्धिमानों के संसर्ग से कुछ थोड़ी-सी जानकारी होने लगी, तब यह समझकर कि 'मैं मूर्ख हूँ' मेरा वह मद ज्वर की भाँति उतर गया ॥८॥

कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं



निरुपमरसं प्रीत्या खादन्नरास्थि निरामिषम्।

सुरपतिमपि श्वा पार्श्वस्थं विलोक्य न शङ्कते
न हि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ॥९॥

अन्वयः—श्वा कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं निरामिषं नरास्थि निरुपमरसं प्रीत्या खादन् सुरपतिम् अपि पार्श्वस्थं विलोक्य न शङ्कते । हि क्षुद्रः जन्तुः परिग्रहफल्गुतां न गणयति ।

व्याख्या—कृमिकुलेति । श्वा = कुक्कुरः, कृमिकुलचितम् = कीटसमूहेन व्याप्तम्, लालाक्लिन्नम्, लाला = स्यन्दिनी, रुचिकरप्रियवस्तुविलोकनेन हेतुना मुखान्निःसरत् स्निग्धं जलमिति यावत्, तया क्लिन्नम् = आर्द्रम्, विगन्धि = विकृतगन्धयुक्तम्, जुगुप्सितम् = घृणास्पदम्, निरामिषम् = निर्गतम् आमिषं यस्मात्तत् मांसशून्यम्, नरास्थि = मनुष्याणां शरीरस्थं कीकसम् 'कीकसं कुल्यमस्थि च' इत्यमरः । निरुपमरसम्, निरुपमः = उपमाशून्यः अपूर्वः रसः—स्वादो, यस्मिन् कर्मणि तद् यथा, भवति तथा, प्रीत्या=प्रसन्नतया, खादन् = भक्षयन्, सुरपतिमपि= इन्द्रमपि, पार्श्वस्थम् = समीपस्थितम्, विलोक्य = दृष्ट्वा, न शङ्कते = न लज्जते । हि = तथा हि युक्तमेव; क्षुद्रः = तुच्छः, जन्तुः = प्राणी, परिग्रहफल्गुताम्, परिग्रहस्य = स्वीकृतस्य वस्तुनः फल्गुताम् = असारताम्, 'असारं फल्गु' इत्यमरः, न गणयति = न विचारयति, हरिणीवृत्तम् ।

भावार्थः—क्षुद्रबुद्धिर्जनः स्वीकृते वस्तुनि सारशून्यत्वं नाकलयति, दुर्गुणमसारं नरास्थि खादन् कुक्कुर इव निन्दास्पदं कर्म कुर्वन् महद्भ्यो भयं न प्राप्नोतीति ।

भाषा—कीड़ों से भरी हुई, लार से भीगी हुई, दुर्गन्धयुक्त, घृणास्पद तथा मांसरहित मनुष्य की हड्डी को चाव से खाता हुआ कुत्ता इन्द्र को भी बगल में खड़ा देखकर कुछ शङ्का ( लज्जा ) नहीं करता । ठीक है, क्षुद्र प्राणी अपनाई वस्तु की निःसारता को नहीं समझता ॥९॥

उदाहरणमुखेन विवेकविकलस्य पुरुषस्य दुष्परिणामां विपत्तिं दर्शयति—

शिरः शार्वं स्वर्गात् पशुपतिशिरस्तः क्षितिधरं
महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् ।
अधोऽधो गङ्गेयं पदमुपगता स्तोकमथवा
विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥१०॥

अन्वयः—इयं गङ्गा स्वर्गात् शार्वं शिरः, पशुपतिशिरस्तः क्षितिधरम्, उत्तुङ्गात् महीध्रात् अवनिम्, 'अपि च अवनेः जलधिम्' (एवम्) अधः अधः स्तोकं पदम् उपगता। अथवा विवेकभ्रष्टानां विनिपातः शतमुखः भवति।

व्याख्या—शिर इति। इयम्=प्रत्यक्षं भूतले दृश्यमाना- गङ्गा=भागीरथी, स्वर्गात्, शार्वम्=शङ्करसम्बन्धि, 'तस्येदम्' इत्यण्प्रत्ययः, 'ईश्वरः शर्व ईशानः शङ्करः' इत्यमरः, शिरः = मस्तकम्, 'उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्' इत्यमरः, पशुपतिशिरस्तः, पशुपतेः=शिवस्य, शम्भुरीशः पशुपतिः शिव' इत्यमरः, शिरः=मस्तकं तस्मात्, पञ्चम्यर्थे तसिल्प्रत्ययः, क्षितिधरम्=हिमालयं नाम पर्वतम्, उत्तुङ्गात्=अत्युच्चात्, महीध्रात्=हिमालयपर्वतात्, अवनिम्= पृथिवीम्, 'गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही' इत्यमरः, अपि च = किञ्च, अवनेः=पृथिव्याः, जलधिम्=समुद्रम्, एवं क्रमेणः अधः अधः=नीचैर्नीचैः, स्तोकम्=अल्पम्, पदम्=स्थानम्, उपागता=प्राप्ता। अथवा=युक्तमेव, विवेकभ्रष्टानाम्=सद्विचाराच्च्युतानां जनानाम्, विनिपातः=अवनतिः, शतमुखः, शतम् = अनेकानि, शतशब्दोऽनेकवचनः, मुखानि = द्वाराणि यस्य तथाभूतः, भवति=जायते। शिखरिणीवृत्तम्।

भावार्थः—उच्चतमाद् विष्णुपदादधःपतिता क्रमेण शिवशिरः हिमालय पृथ्वीं चातिक्रम्य क्षार समुद्रं प्रविशन्ती श्रीगङ्गा, विवेकशून्याः पुरुषाः सर्वतोमुखीं विपत्तिं प्राप्नुवन्ती'त्येवं सूचयन्ती विवेकस्य परमावश्यकत्वं बोधयतीति।

भाषा—स्वर्ग (विष्णुपद) से शंकरजी के सिर पर, वहाँ से हिमालय पर्वत पर फिर (उस) बहुत ऊँचे (हिमालय) पर्वत से पृथ्वी पर और पृथ्वी से समुद्र में, इस प्रकार यह गंगा बराबर नीचे क्रमशः छोटे पद को प्राप्त होती गयी। ठीक है, विवेक से गिरे हुए लोगों की अनेक प्रकार से अवनति होती है ॥१०॥

'मूर्खस्य मूर्खत्वमप्रतीकार्यं भवती'त्युदाहरणैः प्रपञ्चयति—

शक्यो वारयितुं जलेन हुतभुक् छत्त्रेण सूर्यातपो
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ।

व्याधिर्भेषजसङ्ग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम्॥११

अन्वयः—हुतभुक् जलेन वारयितुं शक्यः, सूर्यातपः छत्रेण वारयितुं शक्यः, समदः नागेन्द्रः निशिताङ्कुशेन वारयितुं शक्यः गोगर्दभौ दण्डेन वारयितुं शक्यौ, व्याधिः भेषजसंग्रहैः वारयितुं शक्यः, विषं च विविधैः मन्त्रप्रयोगैः वारयितुं शक्यम्, (एवम्) सर्वस्यैव शास्त्रविहितम् औषधम् अस्ति, (किन्तु) मूर्खस्य औषधं नास्ति।

व्याख्या—शक्य इति। हुतभुक्, हुतम् = होमद्रव्यं घृतादि भुंक्ते = भक्षयतीत्येतादृशः अग्निः, जलेन = वारिणा वारयितुम् = शमयितुम्, शक्यः = योग्यः सूर्यातपः = सूर्यस्य आतपः घर्मं उष्णतेति यावत्, छत्रेण = आतपत्रेण, 'छत्रं त्वातपत्रम्' इत्यमरः वारयितुम् = दूरीकर्तुम् शक्यः, समदः = मदजलेन सहितः, नागेन्द्रः = गजराजः, निशिताङ्कुशेन, निशितः = तीक्ष्णः स चासौ अङ्कुशः सृणिसंज्ञको हस्तिनोदनरूपो लोहमयो वस्तुविशेषः तेन, वारयितुम् = रोद्धुं वशयितुं शक्यः, गोगर्दभौ = वृषभरासभौ, रासभाः गर्दभा खराः' इत्यमरः दण्डेन = लगुडेन तत्प्रहारेणेति यावत्, वारयितुं = दमयितुम् उद्दिष्टं मार्गं नेतुम्, शक्यावितिवचनविपरिणामः, व्याधिः = शरीरगतो रोगो ज्वरादिः, भेषजसङ्ग्रहैः, भेषजानाम् = औषधीनाम् सङ्ग्रहैः = सञ्चयैः यथोचितविनियोगाय स्वसमीपे स्थापनैः, वारयितुम् = निवर्तयितुम् शक्यः, विषम् = सर्पदंशादिसमुद्भूतं गरलम् 'क्ष्वेडस्तु गरलं विषम्' इत्यमरः। विविधैः = अनेकप्रकारैः, मन्त्रप्रयोगैः = विषोत्तारमन्त्राणामावर्तनैः, वारयितुम् = उत्तारयितुम्, शक्यम् = योग्यम्, एवं सर्वस्य पदार्थस्य जातावेकवचनमिदम्, सर्वेषां वस्तूनामिति तात्पर्यम्, शास्त्रविहितम् = शास्त्रोपदिष्टम्, औषधम् = भेषजम् दोषप्रतीकारोपाय इति यावत्, अस्ति = विद्यते, किन्तु मूर्खस्य = जडमतेः पुरुषस्य, औषधं, नास्ति = न विद्यते। शार्दूलविक्रीडितं वृत्तम्।

भावार्थः—अग्न्यादिकं सकल जलादिना वारयितुं शक्यते, परं मूर्खबुद्धेर्निवारणं केनाप्युपायेन कर्तुं न शक्यत इति।

भाषा—आग जल से शान्त की जा सकती है, सूर्य की धूप छाते से रोकी जा सकती है, मतवाला गजराज तीक्ष्ण अङ्कुश से वश में किया जा सकता है, बैल और गधे डण्डे से ठीक किये जा सकते हैं, रोग दवाइयों के संग्रह से दूर



किया जा सकता है और विष अनेक प्रकार के मन्त्रों के प्रयोग से उतारा जा

सकता है। (इस प्रकार) सबकी दवा का विधान शास्त्र में है, किन्तु मूर्ख के लिए कोई दवा नहीं है ॥ ११ ॥

नराकृतिपशुमिदानीं वर्णयति—

साहित्यसङ्गीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः।
तृणं न खादन्नपि जीवमानस्तद्भागधेयं परमं पशूनाम्॥१२॥

अन्वयः—साहित्यसङ्गीतकलाविहीनः (पुरुषः) पुच्छविषाणहीनः साक्षात् पशुः (अस्ति), (अयम्) तृणं न खादन् अपि (यत्) जीवमानः (भवति), तत् पशूनां परमं भागधेयम्।

व्याख्या—साहित्येति। साहित्यसङ्गीतकलाविहीनः, साहित्यम् = काव्यार्थ-प्रतिपादकं शास्त्रम्, सङ्गीतम् = नृत्यगीतवाद्यस्वरूपम्, कलाः = शिल्पाद्याश्चतुः-षष्टिसङ्ख्याकाः ताभिः विहीनः = विरहितः पुरुषः, पुच्छविषाणहीनः, पुच्छेन = लाङ्गूलेन, 'पुच्छोऽस्त्री लूमलाङ्गूले' इत्यमरः, विषाणाभ्यां = शृङ्गाभ्यां च हीनः = रहितः, साक्षात् पशुः = सर्वथैव पशुः अस्ति, अयं पुरुषः, तृणम् = घासम्, न खादन्नपि 'सुप् सुपा' इति समासः; यत् जीवमान = जीवनशीलो भवति, ताच्छील्यवयोवचनशक्तिषु चानश्' इति सूत्रेण चानश् प्रत्ययः, नायं शानच्, जीवतेः परस्मैपदित्वात्तस्यानुपपत्तेः तत्, पशूनाम् = वास्तविकानां गवादिपशूनाम्, परमम् = श्रेष्ठं महद्, भागधेयम् = भाग्यमस्ति।

भावार्थः—साहित्यविषयाद्यनभिज्ञः पुरुषो मानवोचितगुणैर्विरहितो नूनं पशुरेव। जात्या पशौ पुच्छविषाणयोगः, अत्र च नराकारे पशौ न तावत् पुच्छा-दियोग इत्येव द्वयोरनयोर्भेदः। अयं नराकारः पशुश्च तृणमभक्षयन्नपि यज्जी-वति, तन्नूनं वास्तविकानां पशूनां महत्सौभाग्यम्, (अन्यथा, अनेन पशुना तृणे भक्षिते सति) तेषां पशूनां जीवनमेव सर्वथा विनष्टं स्यादिति।

भाषा—साहित्य, सङ्गीत (गाना, बजाना तथा नाचना) और कला (शिल्प आदि) से अपरिचित मनुष्य बिना पूंछ और सींग का साक्षात् पशु है। वह तृण न खाकर भी जो जीवित रहता है, यह प्राकृत पशुओं के लिए बड़े सौभाग्य की बात है ॥ १२ ॥

पुनरपि मूर्खाणां नराणां पशुत्वं विशदीकुर्वन्नाह—

येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः।
ते मर्त्यलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ॥१३॥

अन्वय—येषां विद्या न तपः न, दानं न, ज्ञानं न, शीलं न, गुणः न, धर्मः न ( वर्तते ), ते मर्त्यलोके भुवि भारभूताः ( सन्तः ) मृगाः मनुष्यरूपेण चरन्ति ।

व्याख्या—येषामिति । येषाम् = मनुष्याणाम्, विद्या = व्याकरणादिज्ञानम् न = नास्ति, तपः = कायक्लेशकरं व्रतादिकम्, न = नास्ति, दानम् = सत्पात्रे धनाद्यर्पणम्, न = नास्ति, ज्ञानम् = सदसद्विवेकः, न = नास्ति, शीलम् = सदाचरणम्, न = नास्ति, गुणः = दयादाक्षिण्यादिरूपोऽन्तर्गतो धर्मविशेषः, न = नास्ति, धर्मः = इष्टानिष्टबोधको विधिनिषेधात्मको वेदविहितकर्त्तव्यविशेषः, न = नास्ति, ते = मनुष्याः, मर्त्यलोके = मनुष्यलोके, भुवि, षष्ठ्यर्थे सप्तमी, पृथिव्या इत्यर्थः, भारभूताः = भारस्वरूपाः सन्तः निरर्थकजीवनाः कष्टकरा इति यावत्, मृगाः = पशवः एव, मनुष्यरूपेण = नराकारेण, चरन्ति = विचरन्ति । उपजातिर्वृत्तम् ।

भावार्थः—विद्यादिभिर्विरहिताः पुरुषा मनुष्याकाराः पशव एव, आत्मनो भारेण पृथिवीमाक्रम्य क्लेशयतां तेषां जीवनं नूनं निरर्थकमिति ।

भाषा—जिन ( पुरुषों ' में विद्या, तप, दान, ज्ञान, शील ( सदाचार ), गुण तथा धर्म नहीं है वे पृथ्वी के भारस्वरूप पशु ही हैं जो मनुष्य के रूप में विचरा करते हैं ॥ १३ ॥

'मूर्खजनसंसर्गः सर्वप्रकारेण त्याज्य' इत्याह—

वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह ।
न मूर्खजनसम्पर्कः सुरेन्द्रभवनेष्वपि ॥ १४ ॥

अन्वयः—वनचरैः सह पर्वतदुर्गेषु भ्रान्तं वरम् ( किन्तु ) मूर्खजनसम्पर्कः सुरेन्द्रभवनेषु अपि न ( वरम् अस्ति ) ।

व्याख्या—वरमिति । वनचरैः = अरण्यवासिभिर्मानवैः, सह = साधम्, पर्वतदुर्गेषु = पर्वतानां दुर्गमेषु, स्थानेषु भ्रान्तम् = भ्रमणम, भावे क्त-प्रत्ययः । वरम् = मनाक् ( किञ्चित् ) प्रियम्, किन्तु मूर्खजनसम्पर्कः = मूर्खाणां सम्बन्धः । सुरेन्द्रभवनेष्वपि = दिव्येषु देवराजप्रासादेष्वपि, न वरम् । अनुष्टुप्छन्दः ।

भावार्थः—क्लेशावहेषु स्थानेषु नीरसैः सहः निवासः सुखावहेषु स्थानेषु मूर्खसमागमापेक्षयाऽधिकं श्रेष्ठ इति ।

भाषा—पहाड़ों के दुर्गम स्थान में जङ्गलियों के साथ घूमना अच्छा, परन्तु मूर्खों के साथ इन्द्र के महलों में भी रहना नहीं अच्छा ॥ १४ ॥

'अनादरः कवीन्द्राणां राज्ञो जडत्वसूचक' इत्येवं निरूपयति—

शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयाऽऽगमा
विख्याताः कवयो वसन्ति विषये यस्य प्रभोर्निर्धनाः ।
तज्जाड्यं वसुधाधिपस्य कवयस्त्वर्थं विनापीश्वराः
कुत्स्याः स्युः कुपरीक्षका हि मणयो यैरर्घतः पातिताः॥ १५॥

अन्वयः—शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयाऽऽगमाः विख्याताः कवयः यस्य प्रभोः विषये निर्धनाः ( सन्तः ) वसन्ति, तत् वसुधाधिपस्य जाड्यम्, कवयः तु अर्थं विना अपि ईश्वराः ( सन्ति ), हि कुपरीक्षकाः कुत्स्याः स्युः यैः मणयः अर्घतः पातिताः ।

व्याख्या—शास्त्रोपस्कृतेति । शास्त्रोपस्कृतशब्दसुन्दरगिरः, शास्त्रैः = व्याकरणादिभिः उपस्कृताः = अलङ्कृताः शुद्धाः तथा शब्दैः, सुन्दराः = मनोहराश्च गिरः = वचनानि येषां ते तादृशाः, शिष्यप्रदेयागमाः शिष्येभ्यः = अन्तेवासिजनेभ्यः, प्रदेयाः = दातुं योग्याः, शिक्षणीया इति यावत्, आगमाः = शास्त्राणि येषां ते तथाभूताः, विख्याताः = लब्धकीर्तयः, कवयः = कविजनाः, यस्य प्रभोः = राज्ञः, विषये = देशे, निर्धनाः = दरिद्राः सन्तः, वसन्ति = निवासं कुर्वन्ति, तत् वसुधाधिपस्य = राज्ञः, जाड्यम् = मूर्खत्वं दोषोऽस्ति, कवयस्तु अर्थं विनाऽपि = धनमन्तरेणापि, ईश्वराः = समर्थाः पूजनीयाः सन्ति । हि = निश्चयेन, कुपरीक्षकाः = कुत्सिताः परीक्षकाः, वस्तुनो गुणागुणयोर्यथोचितां परीक्षां कर्तुमसमर्थाः पुरुषाः, कुत्स्याः = निन्दनीयाः, स्युः = भवेयुः, यैः = कुपरीक्षकैः, मणयः = बहुमूल्यानि, रत्नानि अर्घतः = मूल्यात्, 'मूल्ये पूजाविधावर्घः' इत्यमरः, पातिताः = न्यूनतां प्रापिताः । शार्दूलविक्रीडितं वृत्तम् ।

भावार्थः—राजस्थानमाश्रित्यापि कवयो यदि दैवान्निर्धनाः स्युस्तर्हि तेषां यथोचितं समानमकुर्वन् राजैव निन्दनीयः, कवीनां गुणस्य ततो न कापि हानिः । अमूल्यानि रत्नानि यदि कुपरीक्षका अल्पमूल्यानि कुर्युस्तर्हि सोऽयं सद्गुणानभिज्ञतारूपो दोषस्तेषां कुपरीक्षकाणामेव मस्तकमारूढः, रत्नानि पुनर्निर्दोषाण्येवेति ।

भाषा—शास्त्रों के द्वारा अलङ्कृत किये हुए शब्दों से सुन्दर वाणीवाले, तथा शिष्यों को शास्त्रों का उपदेश देनेवाले प्रसिद्ध कवि लोग जिस राजा के देश में निर्धन होकर रहते हैं, उस राजा की ही जड़ता ( इससे सूचित होती ) है, विद्वान् कविलोग तो धन के बिना भी ईश्वर (पूज्य) हैं। क्योंकि बुरे पारखी ही निन्दा के योग्य हैं जिन्होंने रत्नों को मूल्य से गिरा दिया ( अर्थात् उनका मूल्य घटा दिया ) ॥ १५ ॥

'राज्ञा विदुषामादरः करणीय' इत्यर्थमिदानीमाविष्करोति—

हर्तुर्याति न गोचरं किमपि शं पुष्णाति यत्सर्वदा-
ऽप्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ।
कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं
येषां तान्प्रति मानमुज्झत नृपाः ! कस्तैः सह स्पर्धते ॥१६॥

अन्वयः—यत् हर्तुः गोचरं न याति सर्वदा किमपि शं पुष्णाति, अर्थिभ्यः अनिशं प्रतिपाद्यमानम् अपि परां वृद्धिं प्राप्नोति, कल्पान्तेषु अपि निधनं न प्रयाति, तत् विद्याख्यम् अन्तर्धनं येषां (समीपे वर्तते), तान् प्रति हे नृपाः ! मानम् उज्झत, तैः सह कः स्पर्धते ?

व्याख्या—हर्तुरिति । यत् हर्तुः=अपहरणं कर्तुं प्रवृत्तस्य पुरुषस्य, गोचरं न याति=हस्तगतं न भवति, सर्वदा=सर्वस्मिन् काले, किमपि=अनिर्वचनीयम्, शम्=कल्याणम्, पुष्णाति=वर्धयति, अर्थिभ्यः=ग्राहकेभ्यः, अनिशम्=नित्यम्, प्रतिपाद्यमानमपि=दीयमानमपि, पराम्=महतीम्, वृद्धिम्=उन्नतिम्, प्राप्नोति= लभते, कल्पान्तेष्वपि=प्रलयकालेष्वपि, निधनम् = मृत्युं नाशमिति यावत्, न प्रयाति=न प्राप्नोति, तत् विद्याख्यम्=विद्यानामकम्, अन्तर्धनम्=गुप्तं धनम्, येषाम्=विदुषाम्, समीपे वर्तते, तान् प्रति=तेषां विदुषां विषये, हे नृपाः !=राजानः ! मानम्=तदीयतुच्छतासूचकं गर्वम्, उज्झत=त्यजत, तैः=विद्वद्भिः सह=साकम्, 'साकं सत्रा समं सह' इत्यमरः, कः=पुरुषः, स्पर्धते, सङ्घर्षम्= अभिभवेच्छां करोति ? न कोऽपीत्यर्थः शार्दूलविक्रीडितं वृत्तम् ।

भावार्थः—'न चौरहार्यं न च राजहार्यमि'त्यादिविलक्षणगुणशालिना विद्याधनेन समृद्धा विद्वांसो धनमदान्धै राजभिर्न कदाप्यवमाननीयाः । तान् विद्वद्वरान् को वाऽभिभवितुमिच्छतीति ।

भाषा—जो चुराने वाले के हाथ नहीं लगता, जो अनिर्वचनीय कल्याण को सदा बढ़ाता रहता है, जो चाहनेवालों को नित्य देने पर भी परम वृद्धि को प्राप्त होता है और जो प्रलयकाल में भी नष्ट नहीं होता, वह विद्यारूपी गुप्त धन जिनके पास है, उनके प्रति—ऐ राजाओ! गर्व दिखाना छोड़ दो। उनकी स्पर्धा ( दबाने की इच्छा या बराबरी ) करने वाला कौन है ? ॥१६॥

'पण्डितप्रवरान्धनमदान्धा राजानस्तुच्छेन स्वात्मनो लक्ष्मीगुणेन लोभयितुं न शक्नुवन्ती'त्याह—

अधिगतपरमार्थान् पण्डितान् माऽवमंस्था-
स्तृणमिव लघु लक्ष्मीर्नैव तान् संरुणद्धि।
अभिनवमदलेखाश्यामगण्डस्थलानां
न भवति बिसतन्तुर्वारणं वारणानाम् ॥ १७ ॥

अन्वयः—( हे राजन्! ) अधिगतपरमार्थान् पण्डितान् मा अवमंस्थाः, लघु तृणम् इव लक्ष्मीः तान् नैव संरुणद्धि। बिसतन्तुः अभिनवमदलेखाश्यामगण्डस्थलानां वारणानां वारणं न भवति।

व्याख्या—अधिगतेति। हे राजन्! अधिगतपरमार्थान्, अधिगतः = प्राप्तः ज्ञात इति यावत्, परमार्थः = तत्वार्थो यैः तान्, पण्डितान् = सुधियः, मा अवमंस्थाः = न तिरस्कुरु, अवपूर्वान्मन्यतेर्लुङि मध्यमपुरुषैकवचनमिदम्, 'न माङ्योगे' इत्यनेन अडागमप्रतिषेधः, लघु = तुच्छम्, तृणमिव = घास इव, लक्ष्मीः = श्रीः ( सम्पत्तिः ), तान् = पण्डितान्, नैव संरुणद्धि = न कदापि संरोद्धु ( वशीकर्तुं ) शक्नोति। अत्रोदाहरणमाह—बिसतन्तुः = कमलनालसूत्रम्, अभिनवमदलेखाश्यामगण्डस्थलानाम्, अभिनवा = नवीना या मदलेखा = मदजलपङ्क्तिः तया श्यामानि = कृष्णवर्णानि गण्डस्थलानि = कपोलभित्तयः येषां तथाभूतानाम्, वारणानाम् = गजानाम्, 'मतङ्गजो गजो नागः कुञ्जरो वारणः करी' इत्यमरः, वारणम् = रोधकं बन्धनोपयुक्तं वस्तु इति यावत्, न भवति = न जायते।

भावार्थः—सूक्ष्मेण मृणालसूत्रेण मदमत्तानां हस्तिनां बन्धनं यथा न सम्भवति, तथा लक्ष्मीं तुच्छतृणतुल्यां मन्यमाना लोभशून्यास्ते तात्त्विकाः पण्डिता न कदापि तया लक्ष्म्या नृपेण वशीकर्तुं शक्या इति।

भाषा—( हे राजन् ! ) तत्त्व ( असली बात ) को जानने वाले पण्डितों अपमान न करो। तुच्छ तृण की भाँति लक्ष्मी उन्हें बाँध नहीं सकती वश में नहीं कर सकती )। कमलनाल के सूत्र से ताजे मद की लकीर से ले गण्डस्थलवाले हाथियों का वारण ( बन्धन ) नहीं हो सकता ॥ १७ ॥

'कथञ्चित्कुपिते मूढेन राजा विदुषामनादरः मुखेन कर्तुं शक्यते, किन्तु षां गुणानपहर्तुं तस्य कापि शक्तिर्नास्ती'त्युदाहरणमुखेनाह—

अम्भोजिनीवनविहारविलासमेव
हंसस्य हन्ति नितरां कुपितो विधाता।
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां
वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥ १८ ॥

अन्वय—कुपितः विधाता हंसस्य, अम्भोजिनीवनविहारविलासम् एव नितरां हन्ति, तु असौ अस्य दुग्धजलभेदविधौ प्रसिद्धाम् वैदग्ध्यकीर्तिम् पहर्तुं न समर्थः।

व्याख्या—अम्भोजिनीति। कुपितः=क्रुद्धः, विधाता = प्रजापतिर्ब्रह्मा स्रष्टा प्रजापतिर्वेधा विधाता' इत्यमरः, हंसस्य=हंसनामकस्य पक्षिणः, अम्भोजिनीवनविहारविलासम्, अम्भोजिन्याः=कमलिन्याः वनम्=समूहः तस्मिन् विहारः=क्रीडा तस्य विलासः=आनन्द इति यावत्, तम्, एव=केवलम् नितराम्=अत्यन्तम् सर्वथेति यावत्, हन्ति=नाशयति, तु=किन्तु, असौ= ब्रह्मा, अस्य=हंसस्य, दुग्धजलभेदविधौ, दुग्धं=क्षीरं च जलं=सलिलं चेति दुग्धजले तयोः भेदः=पृथग्भावः तस्य विधिः=विधानम् तस्मिन्, प्रसिद्धाम्= विख्याताम्, वैदग्ध्यकीर्तिम्, वैदग्ध्यम्=विदग्धस्य भावः चातुर्यम्, भवार्थे ष्यञ्प्रत्ययः, तदेव कीर्तिः=यशः गुण इति यावत्, ताम्, 'यशः कीर्तिः समज्ञा च' इत्यमरः, अपहर्तुं=नाशयितुम्, न समर्थः=न क्षमः।

भावार्थः—हंसोपरि ब्रह्मा क्रुद्धश्चेत्तर्हि हंसस्य कमलेन सह समागमं न कुर्यात्, किन्तु नीरक्षीरयोर्मिश्रितयोः पृथक्करणं नाम तदीयं गुणमपहर्तुं ब्रह्मणोऽपि नास्ति यथा सामर्थ्यम्, तथा पण्डितानामनादरो राज्ञः सुकरः किन्तु तद्गुणापहारोऽत्यन्तं दुष्करः इति।

भाषा—क्रुद्ध ब्रह्मा हंस का कमलिनी के वन में विहार करना ही एकदम

रोक सकता ( छुड़ा सकता ) है न कि इसके दूध और जल को दूर करने विख्यात चातुर्य को नष्ट करने में समर्थ हो सकता है ॥ १८ ॥

विद्यैव भूषणं पुंसामि'त्याह—

केयूराणि न भूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला
न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्धजाः ।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते
क्षीयन्ते खलु भूषणानि, सततं वाग्भूषणं भूषणम् ॥ १९ ॥

अन्वयः—केयूराणि पुरुषं न भूषयन्ति, चन्द्रोज्ज्वलाः हाराः न, स्नानं विलेपनं न, कुसुमं न, अलंकृताः मूर्धजाः न । एका वाणी पुरुषं समलङ्करोति या संस्कृता धार्यते । खलु भूषणानि क्षीयन्ते, ( किन्तु ) वाग्भूषणं सततं भूष ( भवति ) ।

व्याख्या—केयूराणीति । केयूराणि = बाहुभूषणविशेषा अङ्गदानि, पुरुषम् = मनुष्यम्, न भूषयन्ति = नालङ्कुर्वन्ति, चन्द्रोज्ज्वलाः = चन्द्रवद् धवल प्रकाशमानाः, हाराः = मुक्तादिमणिनिर्मिता लम्बमानाः स्रजः कण्ठभूषण विशेषाः, न भूषयन्ति, स्नानम् = अवगाहनम्, न भूषयतीति वचनविपरि णामः, विलेपनम् = शरीरे विलिप्यमानं चन्दनादिद्रव्यम्, न भूषय कुसुमम् = पुष्पम्, 'प्रसूनं कुसुमं सुमम्' इत्यमरः' न भूषयति, अलंकृताः प्रसाधिताः स्वेच्छानुसारं कङ्कतिकया सरलतां वक्रतां च प्रापिता इति याव मूर्धजा = मूर्धनि मस्तके जाताः केशाः, 'सप्तम्यां जनेर्डः' इति डप्रत्ययः, भूषयन्ति । एका = केवला, वाणी = वाग् वचनमिति यावत्, पुरुषम् = मनुष्यम्, समलङ्करोति = सम्यग् भूषयति, या = वाणी, संस्कृता = व्याकरण संस्कारेण शुद्धा, धार्यते = मुखे स्थाप्यते । खलु = निश्चयेन, भूषणानि = श धारणीयाः केयूराद्या अलङ्काराः, क्षीयन्ते = कालक्रमेण नश्यन्ति, कि वाग्भूषणम्, वागेव = वचनमेव भूषणम् = अलङ्कारः, सततम् = अनिश नित्यमिति यावत्, 'सततेऽनारताश्रान्तसन्तताऽविरताऽनिशम्' इत्यमरः भूषणम् अलङ्कारो भवति ।

भावार्थः—केयूरादिकं यद्यपि शरीरशोभां सम्पादयति तथापि तेन स पुंसामस्थिरं सौन्दर्यं भवति, शुद्धा वाणी पुनः सर्वदा वर्तमानं सौन्दर्यं जनयती तामेव सम्पादयितुं मनुष्यैः प्रयत्नो विधेय इति ।

भाषा—पुरुष को न तो बाजूबन्द ही भूषित करते हैं, न चन्द्रमा के समान उज्ज्वल हार, न स्नान, न ( चन्दनादि का ) लेपन, न फूल और न सँवारे हुए बाल ही। केवल वाणी ही पुरुष को भलीभाँति भूषित करती है, जो व्याकरण आदि से शुद्ध करके धारण की जाती है। और भूषण तो ( कालक्रम से ) नष्ट हो जाते हैं, परन्तु वाणीरूपी भूषण नित्य रहने वाला भूषण है ॥ १९ ॥

विद्याया महिमानं निरूपयति—

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः।
विद्या बन्धुजनो विदेशगमने विद्या परा देवता
विद्या राजसु पूज्यते न तु धनं विद्याविहीनः पशुः ॥२०॥

अन्वयः—विद्या नाम नरस्य अधिकं रूपम् तथा प्रच्छन्नगुप्तं धनम् (अस्ति), विद्या भोगकरी यशःसुखकरी, विद्या गुरूणां गुरुः, विद्या विदेशगमने बन्धुजनः, विद्या परा देवता, विद्या राजसु पूज्यते, धनं तु न ( अतः ) विद्याविहीनः पशुः ( अस्ति )।

व्याख्या—विद्येति। विद्या नाम='विद्ये'ति प्रसिद्धं ज्ञानमयं वस्तु नाम-शब्दः प्रसिद्धो, नरस्य=मनुष्यस्य, अधिकम्=अत्यन्तं श्रेष्ठमिति यावत्, रूपम्=स्वरूपम् तथा प्रच्छन्नगुप्तम्, प्रच्छन्ने=गुप्तद्वारे मुखे गुप्तम्=सुरक्षितम् अत्यन्तं गुप्तमिति यावत्, 'प्रच्छन्नमन्तर्द्वारं स्यादि'त्यमरः, धनम्=द्रव्यम्, अस्ति, विद्या, भोगकरी, भोगान्=स्रक्चन्दनवनितादिभोग्यपदार्थान् करोति=सम्पादयतीति तादृशी, यशःसुखकरी, यशः=कीर्ति, सुखम्=आनन्दं च करोति=वितनोतीति तथाभूता, 'यशः कीर्त्ति, समज्ञा च' इति 'स्यादानन्दातुरानन्दशर्मशातसुखानि च' इति चामरौ, विद्या, गुरूणाम्=महतां श्रेष्ठानाम्, गुरुः=महती श्रेष्ठा, विद्या, विदेशगमने=परदेशयात्रायाम्, बन्धुजनः=हितकारकस्वात्मीयस्निग्धजनसदृशीति यावत्, विद्या, परा=उत्कृष्टा, देवता=देवस्वरूपा, देवशब्दात्स्वार्थे तल्, देवतैव प्रसन्ना सती सर्वार्थदात्रीति यावत्, विद्या, राजसु=राजमध्ये, पूज्यते=आद्रियते, धनं तु=वित्तं तु 'द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु' इत्यमरः, न=पूर्वोक्तगुणविशिष्टं पूज्यं नास्तीत्यर्थः, अतः, विद्याविहीनः=विद्यया विरहितः पुरुषः, पशुः=पशुरेवास्ति।

भावार्थः—सर्वतः सहायतां विरतन्तो पूजास्थानं भोगैश्वर्यादिप्रदायिनी जगति परमोपयोगिनी विद्या किल बहूनां गुणानां निवासभूमिः। विद्ययैव मनुष्यो मनुष्यत्वं लभते, तया विना स नूनं विचारशून्योऽकिञ्चित्करः पशुरेवेति।

भाषा—विद्या ही मनुष्य का श्रेष्ठ स्वरूप तथा अत्यन्त गुप्त धन है। विद्या (वस्त्र आदि) भोग को उत्पन्न करनेवाली और यश तथा सुख को देनेवाली है। विद्या गुरुओं की भी गुरु (अर्थात् उनसे भी अधिक पूज्य) है। विदेशयात्रा में विद्या कुटुम्ब का काम करती है। विद्या सबसे बड़ी देवी है। राजाओं के यहाँ विद्या ही पूजित होती है, न कि धन। इसलिए विद्या से रहित पुरुष पशु है॥ २०॥

इदानीं धनापेक्षया विद्यायाः तैस्तैरुदाहरणैर्दर्शयति—

क्षान्तिश्चेन् कवचेन किं किमरिभिः क्रोधोऽस्ति चेद् देहिनां
ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम्।
किं सर्पैर्यदि दुर्जनाः किमु धनैर्विद्याऽनवद्या यदि
व्रीडा चेत्किमु भूषणैः सुकविता यद्यस्ति राज्येन किम्॥ २१॥

अन्वयः—देहिनां क्षान्ति चेत् (तर्हि) कवचेन किं फलम्, क्रोधः अस्ति चेत् अरिभिः किम्, ज्ञातिः चेत् अनलेन किम् यदि सुहृत् दिव्यौषधैः किम्। यदि दुर्जनाः सर्पैः किम्। यदि अनवद्या विद्या धनैः किमु, व्रीडा चेत् भूषणैः किमु, यदि सुकविता अस्ति राज्येन किम्।

व्याख्या—क्षान्तिश्चेदिति। देहिनाम्, देहः=शरीरं येषामस्ति ते देहिनः तेषां मनुष्याणामिति यावत्, क्षान्तिः=क्षमा, चेत्=यदि (अस्ति तर्हि) कवचेन=वर्मणा लोहमयेन शरीराच्छादनविशेषेण, 'तनुत्रं वर्म दंशनम्, उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम्' इत्यमरः, किं फलम्=किं प्रयोजनम्, शत्रोः प्रहारान् अगणयतः क्षमाशीलस्य शरीरे रक्षकस्य कवचस्य प्रयोजनं किमपि नास्तीत्यर्थः, क्रोधः=रोषः 'कोपक्रोधाऽमर्षरोषप्रतिघा' इत्यमरः अस्ति चेत्=यदि वर्तते, (तर्हि) अरिभिः=शत्रुभिः, किम्, जियत इति शेषः। अनर्थकारके क्रोधे विद्यमाने शत्रवः किं नाम तस्मादधिकमनर्थं कर्तुं शक्नुयुः। ज्ञातिः=दायादः सुतबान्धवादिवर्ग इति यावत् चेत्=यदि (तर्हि)

अनलेन=अग्निना, किं प्रयोजनम्, अग्निवद् दायादाः सन्तापयन्तीति दायादेषु सत्सु वह्नेः प्रयोजनं नास्त्येवेत्यर्थः; यदि=चेत्, सुहृत्=मित्रम्, 'अथ मित्रं सखा सुहृत्' इत्यमरः, (तर्हि) दिव्यौषधैः=गुणातिशयशालिभिः भेषजैः, किं फलम्, हितकारिणि मित्रे सति हितप्राप्त्यर्थं पुनर्दिव्यौषधसेवनं निष्फलमेव। यदि=चेत्, दुर्जनाः=खलाः (सन्ति तर्हि) सर्पैः=भुजङ्गैः 'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः' इत्यमरः, किं क्रियते, प्राणघातो नाम सर्पाणां कार्यं दुर्जनैरेव क्रियते, ततो दुर्जनेषु सत्सु सर्पाणामावश्यकतैव, का? यदि=चेत्, अनवद्या=निर्दोषा, विद्या=ज्ञानम्, तर्हि, धनैः=वित्तैः, किमु=किं प्रयोजनम्; सर्वार्थसाधिकायां विद्यायां सत्यां धनस्य प्रयोजनं विशिष्टं पुनः किं नाम स्यात्? व्रीडा=लज्जा, महत्सु विनयप्रदर्शकः सङ्कोच इति यावत्, चेत्=यदि, भवेत्, (तर्हि) भूषणैः=अलङ्कारैः, किमु=किं प्रयोजनम्, व्रीडा (विनयापरपर्यायः सङ्कोचः) भूषणानि च शरीरशोभां वर्धयन्तीति व्रीडायां विद्यमानायां भूषणानां प्रयोजनमेव किम्? यदि चेत्, सुकविता=सुन्दरं कवित्वम्, अस्ति=विद्यते, तर्हि राज्येन=लोकाधिपत्येन, किम्? व्यर्थमेव तत्; सुखप्राप्तिस्तथा सर्वेषां वशीकरणं सत्कवितया राज्येन च सम्भवतीति सत्कवितागुणे वर्तमाने राज्यं व्यर्थमेवेत्यर्थः। अत्र क्षान्त्यादिभिः कवचादीनां व्यर्थत्वं प्रतिपाद्य कविना धनस्य गौणत्वं विद्यायाश्च मुख्यत्वं दृढं गूढं स्थापितम्। शार्दूलविक्रीडितं वृत्तम्।

भावार्थः—क्षान्ति (क्षमा) प्रभृतिकं हि कवचादिभ्यो विशेषेण शरीरसंरक्षणादिकं कार्यं कर्तुं शक्नोतीति। अयं श्लोकः 'क्षमा शरीरं भूषयति, क्रोधः पुरुषं नाशयति, ज्ञातिः सन्तापयति, मित्रं हितं करोति, दुर्जनाः प्राणघातका भवन्ति विद्या सर्वं साधयति, व्रीडा शोभां वर्धयति, सत्कविता च जनान् वशीकरोती'त्येवं नीतेरुपदेशं सम्यगुद्घोषयतीत्यलम्।

भाषा—मनुष्यों में यदि क्षमा हो तो कवच की क्या आवश्यकता, क्रोध हो तो शत्रुओं का क्या प्रयोजन, बिरादरी के लोग हों तो आग का क्या काम, मित्र हो तो उत्तम औषधों से क्या लाभ, दुर्जन हों तो सर्पों का क्या काम, निर्दोष विद्या हो तो धन की क्या आवश्यकता, शर्म हो तो गहनों से क्या मतलब, सुन्दर कविता हो तो राज्य से क्या प्रयोजन ॥ २१ ॥

अवश्यं सङ्ग्राह्यं लोकस्थितेः स्थापके पुरुषाणां गुणविशेषं दर्शयति—

दाक्षिण्यं स्वजने दया परिजने शाठ्यं सदा दुर्जने
प्रीतिः साधुजने नयो नृपजने विद्वज्जने चार्जवम्।
शौर्यं शत्रुजने क्षमा गुरुजने कान्ताजने धृष्टता
ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥ २२ ॥

अन्वयः—स्वजने दाक्षिण्यम्, परिजने दया, दुर्जने सदा शाठ्यम्, साधुजने प्रीतिः', नृपजने नयः, विद्वज्जने च आर्जवम्, शत्रुजने शौर्यम्, गुरुजने क्षमा, कान्ताजने धृष्टता (उचिता) एवं ये च पुरुषाः कलासु कुशलाः (सन्ति), तेषु एव लोकस्थितिः (वर्तते)।

व्याख्या—दाक्षिण्यमिति। स्वजने=पुत्रकलत्राद्यात्मीयवर्गे, दाक्षिण्यम्=औदार्यम्, आनुकुल्यमिति यावत्; परिजने=सेवकादिवर्गे, 'परजने' इति पाठे स्वस्माद्भिन्ने जने इत्यर्थः, दया=कृपा 'कृपा दयाऽनुकम्पा स्या'दित्यमरः, दुर्जने=दुष्टे जने, सदा=सर्वस्मिन् काले, शाठ्यम्=वञ्चकत्वम्, साधुजने=सज्जने, प्रीतिः=प्रेम, नृपजने=राजसु, नयः=अनुवर्तनरूपा नीतिः विद्वज्जने च=पण्डितेषु च, आर्जवम्=सरलता, निष्कपटतेति यावत्, 'आर्जवमि'ति ऋजुशब्दाद् भावेऽण्प्रत्ययः, शत्रुजने=वैरिषु, शौर्यम्=विक्रमः, गुरुजने=पूज्येषु, क्षमा=सहनशीलता, गुरूणां परुषवचनानि सोढुं शक्तिरिति यावत्, कान्ताजने=स्त्रीषु, धृष्टता=प्रागल्भता, स्वप्रभुत्वस्थापनमिति यावत्, उचिता। एवम्=अनेन रूपेण, ये च पुरुषाः=ये पुनर्जनाः, कलासु=पूर्वोक्तव्यवहारचातुर्यादिषु गुणेषु, कुशलाः=निपुणाः सन्ति, तेष्वेव=तेषां पुरुषाणामाश्रयेणैवेति यावत्, लोकस्थितिः लोकस्य=संसारस्य स्थितिः=सत्ता वर्तते, शार्दूलविक्रीडितं वृत्तम्।

भावार्थ—स्वजनदाक्षिण्यादीन् लोकव्यवहारोचितान् गुणान् संश्रयन्तो लोकस्थितेः स्थापकाः सज्जना एव लोकान् विनयं शिक्षयितुं प्रभवन्तीति।

भाषा—अपने लोगों (पुत्र-कलत्र आदि) के साथ उदारता, सेवक लोगों के साथ दया, दुष्टों के साथ दुष्टता, सज्जनों के साथ प्रीति, राजा लोगों के साथ नीति, विद्वानों के साथ सीधापन, शत्रुओं के साथ शूरता, गुरुजनों के साथ क्षमा (सहनशीलता), तथा स्त्रियों के साथ धृष्टता। जो लोग इस प्रकार की कलाओं में निपुण हैं उन्हीं पर संसार टिका हुआ है ॥ २२ ॥

सत्सङ्गतेर्महिमानं वर्णयति—

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति।
चेतः प्रसादयति दिक्षु तनोति कीर्त्तिं
सत्सङ्गतिः कथय किं न करोति पुंसाम् ? ॥ २३ ॥

अन्वयः—धियः जाड्यं हरति, वाचि सत्यं सिञ्चति, मानोन्नतिं दिशति, पापम्, अपाकरोतिः चेतः प्रसादयतिः दिक्षु कीर्तिं तनोति ( हे मनुष्य ? ) कथय सत्सङ्गतिः पुंसां किं न करोति।

व्याख्या—जाड्यमिति। धियः = बुद्धेः, 'बुद्धिर्मनीषा धिषणा धीः' इत्यमरः, जाड्यम् = मन्दताम्, हरति = नाशयतिः वाचि = वचने, सत्यम् = सत्यताम्, सिञ्चति = पल्लवयति स्थापयतीति यावत्, मानोन्नतिम्, मानस्य = आदरस्य उन्नतिः = वृद्धिः ताम्, दिशति = सम्पादयति, पापम् = किल्विषम् 'पापं किल्विषकल्मषम्' इत्यमरः, प्रसादयति = प्रसन्नं निर्मलं करोति, दिक्षु = काष्ठासु, 'दिशस्तु ककुभः काष्ठा' इत्यमरः, कीर्तिम् = यशः, तनोति = विस्तारयति, ( हे मनुष्य ! ) कथय = ब्रूहि, सत्सङ्गतिः = सत्पुरुषाणां सहवासः, पुंसाम् = पुरुषाणाम्, 'स्युः पुमांसः पञ्चजनाः पुरुषा' इत्यमरः, किम् = कार्यम्, न करोति = न विदधाति ? अपि तु सर्वं करोति। वसन्ततिलकावृत्तम्।

भावार्थः—बुद्धिमान्द्यहरणं सत्यवचनप्रयोगं मानवृद्धिं पापनाशं मनःप्रसादं यशश्च साम्पादयता सत्सङ्गमेन पुरुषाणां किं किं कार्यं न साध्यते ? नूनं सर्वार्थसाधकः सत्सङ्गम इति।

भाषा—बुद्धि की मन्दता को दूर करता हैं, वाणी में सत्यता को पल्लवित करता है, ऊँचा सम्मान प्रदान करता है, पाप को दूर करता है, चित्त को प्रसन्न करता है तथा दिशाओं में यश फैलाता है। बताओ, सज्जनों का साथ पुरुषों के लिए क्या नहीं करता है ॥ २३ ॥

साम्प्रतं कवीन्द्राणां सर्वोत्कृष्टत्वं दर्शयति।

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।
नास्ति येषां यशःकाये जरामरणजं भयम् ॥ २४ ॥

अन्वयः—सुकृतिनः रससिद्धाः ते कवीश्वराः जयन्ति येषां यशःकाये जरामरणजं भयं नास्ति।

व्याख्या—जयन्तीति। सुकृतिनः=पुण्यवन्तो धन्याश्च, 'सुकृती पुण्यः धन्य' इत्यमरः, रससिद्धाः, रसेषु=शृङ्गारादिषु पारदादिषु वा सिद्धाः=निपुण पारङ्गताः, ते प्रसिद्धाः वाल्मीकिव्यासकालिदासप्रभृतयः, कवीश्वराः=क्रान्तदर्शि सिद्धसरस्वतीका महाकवयः, जयन्ति=सर्वोत्कर्षेण वर्तन्ते, येषाम्=महाकवीना यशःकाये=कीर्तिरूपे शरीरे, जरामरणजम्, जरा=वार्धक्यम् मरणम्=मृत्युश्चे ताभ्यां जातम्=उत्पन्नम्, भयम्=भीतिः, 'भीतिर्भीः साध्वसं भयम्' इत्यम नास्ति=न विद्यते।

भावार्थः—अहो! श्रीमतां धन्यानां पुण्यात्मनां रसिकशिरोमणी महाकवीनां प्रशंसनीयो महिमा, येषां दिगन्तव्यापिनी कीर्तिर्नित्यं नवेव जागरू वर्तत इति।

भाषा—सब रसों में सिद्ध तथा पुण्यवान् वे महाकवि लोग सबसे बढ़ हैं जिनके, यशरूपी शरीर को बुढ़ापे और मृत्यु का भय नहीं है ॥२४॥

'सर्वान्तर्यामिनो भगवतो विष्णोः करुणा सर्वं सम्पादयती'त्याह—

सूनुः सच्चरितः सती प्रियतमा स्वामी प्रसादोन्मुखः
स्निग्धं मित्रमवञ्चकः परिजनो निःक्लेशलेशं मनः।
आकारो रुचिरः स्थिरश्च विभवो विद्यावदातं मुखं
[1]तुष्टे विष्टपकष्टहारिणि हरौ सम्प्राप्यते देहिना ॥ २५ ॥

अन्वयः—विष्टपकष्टहारिणि हरौ तुष्टे सति देहिना सच्चरितः सूनुः, स प्रियतमा, प्रसादोन्मुखः स्वामी, स्निग्धं मित्रम्, अवञ्चकः परिजनः, निःक्लेशले मनः, रुचिरः आकारः, स्थिरः विभवः, विद्यावदातं मुखं च (इति सर्वं) सम्प्राप्यते

व्याख्या—सूनुरिति। विष्टपकष्टहारिणि, विष्टपस्य=जगतः, 'विष्ट भुवनं जगत्' इत्यमरः, कष्टानि=दुःखानि हर्तुम्=नाशयितुं शीलमस्येत्ये तादृशे, हरौ=विष्णौ परमात्मनि, तुष्टे सति=प्रसन्ने सति, देहिना=मनुष्येण सच्चरितः=सदाचरणशीलः, सूनुः=पुत्रः, 'आत्मजस्तनयः सूनुः सुतः पुत्र इत्यमरः, सती=साध्वी पतिव्रता, प्रियतमा=भार्या, प्रसादोन्मुखः, प्रसादे= प्रसन्नतायाम् 'प्रसादस्तु प्रसन्नता' इत्यमरः, उन्मुखः=तत्परः, स्वामी=प्रभु

१. अत्र 'तुष्टे विष्टपहादिणीदहरौ...' इति पाठो ग्रन्थान्तरे वर्तते।

स्निग्धम् = स्नेहयुक्तम्, मित्रम् = सखा, अवञ्चकः = विश्वासपात्रम्, परिजनः = सेवकवर्गः, निःक्लेशलेशम्, निर्गतः क्लेशलेशः = स्वल्पमपि दुःखं यस्मात्तत्, मनः = चित्तम्, रुचिरः = सुन्दरः, आकारः = स्वरूपम्, स्थितः = अव्ययः, सर्वदा वर्तमान इति यावत्, विभवः = ऐश्वर्यम्, विद्यावदातम्, विद्यया = ज्ञानेन अवदातम् = निर्मलम्, मुखम् = वदनं चेत्येतत्सर्वं, सम्प्राप्यते = सम्यग् लभ्यते। शार्दूलविक्रीडितं वृत्तम्।

भावार्थः—सत्पुत्रकलत्रादिप्राप्तिर्भगवतः प्रसादेनैव भवतीति।

भाषा—संसार के कष्ट को हरनेवाले भगवान् के प्रसन्न होने पर मनुष्य को सदाचारी पुत्र, पतिव्रता भार्या, प्रसन्न होनेवाला स्वामी, स्नेहयुक्त मित्र, विश्वासपात्र सेवक, सर्वथा क्लेशों से रहित (शान्त) चित्त, सुन्दर स्वरूप, स्थायी सम्पत्ति, विद्या से निर्मल मुख, ये सब मिलते है ॥ २५ ॥

मनुष्याणां कल्याणस्य पन्थानं निरूपयति—

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम्।
तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा
सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥ २६ ॥

अन्वयः—प्राणाघातात् निवृत्तिः, परधनहरणे संयमः, सत्यवाक्यम्, काले शक्त्या प्रदानम्, परेषां युवतिजनकथामूकभावः, तृष्णास्रोतोविभङ्गः, गुरुषु विनयः, सर्वभूतानुकम्पा च एषः सर्वशास्त्रेषु अनुपहतविधिः सामान्यः श्रेयसां पन्था (अस्ति)।

व्याख्या—प्राणाघातादिति। प्राणाघातात्, प्राणानाम् = असूनाम् आघातः = हत्या पीडनं च तस्मात्, निवृत्तिः = विमुखता, परधनहरणे, परेषां = अन्येषां धनस्य = वित्तस्य हरणम् = लुण्ठनं तस्मिन्, संयमः = मनसो विग्रहः अप्रवृत्तिरिति यावत्, सत्यवाक्यम् = यथार्थभाषणम्, काले = योग्ये समये, शक्त्या = स्वसामर्थ्यानुसारम्, प्रदानम् = धनादिवितरणम्, परेषाम् = अन्येषां पुरुषाणाम् (इदं युवतिशब्देन सम्बध्यते), युवतिजनकथामूकभावः, युवतिजनकथासु = स्त्रीविषयकवार्तासु मूकभावः = मौनम्, तृष्णास्रोतोविभङ्गः, तृष्णायाः = लोभस्य स्रोतः = प्रवाहः तस्य विभङ्गः = अवरोधनम्, गुरुषु =

पूज्येषु, विनयः=नम्रता, सर्वभूतानुकम्पा च, सर्वेषु = अखिलेषु भूतेषु प्राणिषु अनुकम्पा=दया च, एषः=अयम्, सर्वशास्त्रेषु = सर्वेष्वागमेषु अनुपहतविधिः, अनुपहत=अक्षुण्णः, अनुस्यूत इति यावत्, विधिः=विधानं यस्य सः, 'विधिर्विधाने दैवेऽपि' इत्यमरः, सामान्यः = सकलजनसाधारणः, श्रेयसाम् = कल्याणानाम्, पन्थाः=मार्गः अस्ति । स्रग्धरावृत्तम् ।

भावार्थः—सर्वजनसुखकारिता चौर्यराहित्यं सत्यवादित्वं दानशीलता परस्त्रीजनकथायामप्रवृत्तिर्लोभशून्यता नम्रता सर्वानुग्रहबुद्धिश्चेत्येतानि सर्वाणि पुरुषं कल्याणपथं नयन्तीति ।

भाषा—जीवहिंसा से दूर रहना, दूसरे के धन के हरण से चित्त को रोकना, सच बोलना, उचित समय पर सामर्थ्य के अनुसार दान देना, पराई स्त्रियों की चर्चा के समय मौन धारण करना, तृष्णा के प्रवाह को रोकना गुरुजनों के प्रति नम्रता रखना, तथा सब जीवों पर दया दिखलाना, यही सब शास्त्रों में अप्रतिषिद्ध (उचित) विधिवाला सर्वजनसाधारण कल्याण का मार्ग है ॥ २६ ॥

'अधममध्यमोत्तमानां सर्वेषां पुरुषाणां कार्यसम्पादनविधौ कीदृशी स्थितिर्भवती'ति प्रतिपादयति—

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहिता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमजना न परित्यजन्ति ॥ २७ ॥

अन्वयः—नीचैः विघ्नभयेन न प्रारभ्यते खलु, मध्याः प्रारभ्य विघ्नविहिताः विरमन्ति; उत्तमजनाः विघ्नैः पुनः पुनः प्रतिहन्यमानाः अपि प्रारब्धं परित्यजन्ति ।

व्याख्या—प्रारभ्य इति । नीचैः=अधमैः पुरुषैः, विघ्नभयेन, विघ्नेभ्यः = कार्यनाशकेभ्यः प्रत्यूहेभ्यः, 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः, भयेन = भीत्या कारणेन, न प्रारभ्यते = कार्यारम्भ एव न क्रियते । मध्याः = नोत्तमा न चाधमाः किन्तु मध्यमस्थितिकाः साधारणाः, जनाः, प्रारभ्य = कार्यारम्भं कृत्वा, विघ्नविहिता, विघ्नैः = प्रत्यूहैः विहताः = पीडिताः, सन्तः भग्नोद्यमाः

इति यावत्, विरमन्ति=कार्यं त्यजन्ति। 'विरमन्ती'ति 'व्याङ्परिभ्यो रमः' इत्यनेन परस्मैपदम्, उत्तमजनाः=श्रेष्ठगुणाः पुरुषाः, विघ्नैः=प्रत्यूहैः, पुनः पुनः=वारं वारम्, प्रतिहन्यमाना अपि=आक्रान्ता अपि, प्रारब्धम्=उपक्रान्तं कर्म, न परित्यजन्ति=नोपेक्षन्ते, सर्वदा कुर्वन्त्येवेत्यर्थः। वसन्ततिलकावृत्तम्।

भावार्थः—उत्तममध्यमाधमभेदेन यथा पुरुषास्त्रिविधा भवन्ति; तथा तेषां कार्याणां स्वरूपाण्यपि त्रिविधानि। उत्तमः पुरुषो मनस्वी विघ्नवज्रप्रहारमविगणय्य कार्य-पूर्णतां नीत्वैव विश्रान्तिं लभते, मध्यमः प्रारभ्यापि कार्यं, तस्य दुष्करतामनुभवन् भग्नोद्यमः सन् कार्यात्पराङ्मुखो भवति, अधमः पुनर्विघ्नसम्भावनया कार्यस्यारम्भमेव न करोति।

भाषा—नीच ( हीन ) पुरुष विघ्न के डर से किसी काम को शुरू ही नहीं करते, और मध्यम श्रेणी के लोग शुरू करके भी विघ्नों से विचलित होकर रुक जाते है। ( परन्तु ) विघ्नों द्वारा बार-बार विचलित किये जाने पर भी उत्तम पुरुष ( किसी काम को ) शुरू करके ( उसे ) नहीं छोड़ते ॥२७॥

अत्यन्त दुष्करां स्वभावसिद्धां सदाचारपरिपाटीं पालयन्तः सज्जना लोकानामुपदेशकतां प्रमाणतां गच्छन्ती'त्येवं विवक्षुराह—

असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः
प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम्।
विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम्? ॥ २८ ॥

अन्वयः—असन्तः न अभ्यर्थ्याः, कृशधनः सुहृदपि न याच्यः, प्रिया न्याय्या वृत्तिः ( आश्रयणीया ), मलिनम् असुभङ्गे अपि असुकरम्, विपदि उच्चैः स्थेयम् महतां च पदम् अनुविधेयम्, इदं विषमम् असिधाराव्रतं सतां केन उद्दिष्टम् ?

व्याख्या—असन्त इति। असन्तः=दुर्जनाः, न अभ्यर्थ्याः=न प्रार्थनीयाः, कृशधनः, कृशम्=स्वल्पं क्षीणं वा धनम्=वित्तं यस्य तादृशः, सुहृदपि=मित्रमपि, न याच्यः=नाभ्यर्थनीयः, प्रिया=सन्तोषकारिणी, न्याय्या=न्याययुक्ता, वृत्तिः=जीविका, आश्रयणीया, मलिनम्=निन्द्यं कर्म, असुभङ्गेऽपि=

प्राणान्तकालेऽपि, असुकरम् = दुष्करम्, विपदि = विपत्तौ, उच्चैः = अदीनम् उन्नतं च यथा स्यात्तथा, स्थेयम् = वर्तितव्यम् च = अपि च, महताम् = महापुरुषाणाम्, पदम् = पदवी, अनुविधेयम् = अनुवर्तनीयम् इदम् = पूर्वोक्तस्वरूपम्, विषमम् = दुष्करं क्लेशकरम्, असिधारव्रतम् = खड्गधारेव तीक्ष्णतरो नियमः, सताम् = सत्पुरुषाणाम्, केन = पुरुषेण, उद्दिष्टम् = उपदिष्टम् ? न केनापीत्यर्थः । शिखरिणीवृत्तम ।

भावार्थः—स्वभावसिद्धोऽयं सज्जनानां गुणः, तत् ते खलजनार्थनादिरूपात् सदाचारात् कदापि विरता न भवन्तीति ।

भाषा—सज्जनों को इस कठोर असिधाराव्रत का किसने उपदेश दिया है, जिसमें असज्जनों तथा थोड़े धनवाले मित्र से ( धन आदि ) नहीं माँगा जाता, प्रिय और न्याययुक्त जीविका का आश्रय लेना पड़ता है, निन्द्य कर्म करना प्राणनाश ( की सम्भावना ) होने पर भी दुष्कर होता है विपत्ति में ऊँचे रहना होता है तथा बड़े लोगों के मार्ग का अनुसरण करना होता है ॥ २८ ॥

'मानी जनः कृच्छ्रगतोऽपि हीनां दीनां स्वमहत्त्वापहारिणीं च दशां न कदापि स्वीकरोती'ति सिंहोदाहरणेन दर्शयति—

क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्राणोऽपि कष्टां दशा-
मापन्नोऽपि विपन्नदीधितिरिति प्राणेषु नश्यत्स्वपि ।
मत्तेभेन्द्रविभिन्नकुम्भपिशितग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ? ॥ २९ ॥

अन्वय—क्षुत्क्षामः अपि जराकृशः अपि शिथिलप्राणः अपि कष्टां दशाम् आपन्नः अपि विपन्नदीधितिः अपि मत्तेभेन्द्रविभिन्नकुम्भपिशितग्रासैकबद्धस्पृहः मानमहताम् अग्रेसरः केसरी प्राणेषु नश्यत्सु अपि जीर्णं तृणम् अत्ति किम् ?

व्याख्या—क्षुत्क्षामोऽपि । क्षुत्क्षामः, क्षुधा = बुभुक्षया क्षामः = क्षीणः दुर्बल इति यावत्, तादृशोऽपि जराकृशः, जरया = वृद्धत्वेन कृशः = जीर्णः जर्जरशरीर इति यावत् तथाविधोऽपि, शिथिलप्राणः, शिथिलः = श्लथः न्यूनः प्राणः = शक्तिर्यस्य तथाभूतोऽपि, 'शक्तिः पराक्रमः प्राणः' इत्यमरः, कष्टाम् =

कष्टकारिणीम्, दशाम्=अवस्थाम्, आपन्नोऽपि=प्राप्तोऽपि विपन्नदीधितिः, विपन्ना=नष्टा दीधितिः=कान्तिर्यस्य सोऽपि, मत्तेभेन्द्रविभिन्नकुम्भपिशित-ग्रासैकबद्धस्पृहः, मत्ताः=मदजलपूर्णाः ये इभेन्द्राः=गजश्रेष्ठाः तेषां विभिन्नाः=विदीर्णाः ये कुम्भाः=गण्डस्थलानि तेषां पिशितम्=मांसम् तस्य ग्रासः=भक्षणं तस्मिन् एकम् केवलम् बद्धा=नियता रुद्धा स्पृहा=इच्छा यस्य सः, मानमहताम्, मानेन=स्वाभिमानेन महान्तः=उत्कृष्टाः तेषाम्, अग्रेसरः=अग्रणीः, केसरी=सिंहः 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः' इत्य-मरः, प्राणेषु=असुषु नश्यत्स्वपि=क्षीयमाणेष्वपि, जीर्णम्=पुराणं, शुष्क-मिति यावत्, तृणम्=घासम्, अत्ति=खादति किम् ? न कदापि खादती-त्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

भावार्थः—अवस्थाविपर्ययान्नानाप्रकाराणि कष्टान्यनुभवन् सर्वतः साम-र्थ्यहीनोऽपि मानी पुरुषो निजं पुरातनं सत्त्वगुणं स्मरन् न जातु तथा क्षुद्रां वृत्तिं समाश्रयति, यथा जराजर्जरो मरणासन्नोऽपि सिंह स्वयं हतैर्गजैरेव जीवनं वाहयन् शुष्कतृणानि भक्षयितुं न कदाप्युत्साहसम्पन्नो भवतीति।

भाषा—मस्त गजराज के फाड़े हुए मस्तक के मांस को ही खाने की इच्छा करने वाले बड़े-बड़े मानियों में अग्रगण्य, भूख के कारण क्षीण, बुढ़ापे के कारण दुर्बल, बलहीन, कष्ट देनेवाली दशा को प्राप्त तथा तेज-हीन सिंह प्राण के विनाशोन्मुख होने पर भी क्या सूखा तृण खाता हैं ? अर्थात् कभी नहीं खाता ॥ २९ ॥

पूर्वोक्तमर्थमेव पुनः प्रकारान्तरेण समर्थयति—

स्वल्पस्नायुवसावशेषमलिनं निर्मांसमप्यस्थिकं[1]
श्वा लब्ध्वा परितोषमेति न तु तत्तस्य क्षुधाशान्तये।
सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् ॥ ३० ॥

अन्वयः—श्वा स्वल्पस्नायुवसावशेषमलिनं निर्मांसम् अपि अस्थिकं लब्ध्वा

१. 'मप्यस्थि गोः' इत्येष पाठो मुद्रितपुस्तके उपलभ्यते। अत्र चास्माभिः श्रीमद्गुरुपरम्पराप्राप्त एव पाठ उपरिष्टान्निवेशितो बहु मन्यते। अस्य स्वारस्यं विद्वद्भिराकलनीयम्।

परितोषम् एति तु तत् तस्य क्षुधाशान्तये न ( भवति ) ? सिंहः अङ्कम् आगतं जम्बुकम् अपि त्यक्त्वा द्विपं निहन्ति । ( हि ) कृच्छ्रगतः अपि सर्वः जनः सत्त्वानुरूपं फलं वाञ्छति ।

व्याख्या—स्वल्पेति । श्वा = शुनकः, 'शुनको मषकः, श्वा स्यात्' इत्यमरः, स्वल्पस्नायुवसावशेषमलिनम्, स्नायुः = वस्नसा तत्तच्छरीरावयवसन्धिबन्धनरूपा, वसा = हृन्मेदोमांसजन्यः स्नेहविशेषश्च तयोर्द्वयोः स्वल्पः = लेशरूपेण स्थितः यः अवशेष = अवशिष्टभागः तेन मलिनम् = मलदूषितम्, निर्मांसमपि = मांसेन रहितमपि, अस्थिकम् = कुत्सितं स्वल्पं वा कीकसम्, कुत्सितार्थे अल्पार्थे वा कप्रत्ययः, लब्ध्वा = प्राप्य, परितोषम्, प्रसन्नताम्, इति = प्राप्नोति, तु = किन्तु, तत् = अस्थि, तस्य = शुनः, क्षुधाशान्तये = बुभुक्षानिवारणाय, तृप्तय इति यावत्, न भवति, सिंहः = मृगराजः, अङ्कम् = उत्सङ्गम्, 'उत्सङ्गचिह्नयोरङ्कः' इत्यमरः, आगतमपि = प्राप्तमपि, जम्बुकम् = शृगालम् 'शृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः' इत्यमरः, त्यक्त्वा = विहाय, द्विपम् = हस्तिनम्, हन्ति = मारयति । तथाहि, कृच्छ्रगतोऽपि = कष्टेषु पतितोऽपि, सर्वोजनः = सकलो मनुष्य , सत्वानुरूपम्, सत्वस्य = उत्साहसम्पादकस्य, चेतोगतस्य धर्मविशेषस्य शक्तेरिति यावत्, अनुरूपम् = अनुकूलम्, फलम् = लाभम्, वाञ्छति = इच्छति । शार्दूलविक्रीडितं वृत्तम् ।

भावार्थ—कुक्कुरो तथा शुष्कं स्वल्पमप्यस्थिमात्रं प्राप्य सन्तुष्यति, यथा च सिंहः प्राप्तमपि शृगालं परित्यज्य गजायैव स्पृहयति तथैव सर्वे लोकाः स्वसामर्थ्यानुसारं स्वां प्रकृतिमेवाश्रयन्तीति । एतेन प्रकृतिर्दुस्त्यजेति कविना स्फुटं प्रतिपादितम् ।

भाषा—कुत्ता नस और चर्बी के अवशिष्ट (बचे हुए) थोड़े से भाग (के लगे रहने) से गन्दी तथा मांसरहित भी छोटी-सी हड्डी को पाकर सन्तुष्ट हो जाता है, यद्यपि वह उसकी भूख मिटाने भर के लिए नहीं होती । सिंह गोद में भी आये हुए गीदड़ को छोड़कर हाथी का वध करता है । कष्ट में रहने पर भी सब प्राणी अपनी शक्ति के अनुसार ही फल चाहते हैं ।

'आश्रयदातुः पुरस्तादुत्तमाधमयोः कीदृशो व्यवहारो भवती'त्युदाहरणमुखेन प्रतिपादयति—

लाङ्गूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनं च ।
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ३१ ॥

अन्वयः--श्वा पिण्डदस्य ( पुरतः ) लाङ्गूलचालनम् अधः चरणाऽवपातं भूमौ निपत्य वदनोदरदर्शनं च कुरुते, गजपुङ्गवः तु पिण्डदस्य ( पुरतः ) धीरं विलोकयति चाटुशतैः च भुङ्क्ते ।

व्याख्या--लाङ्गूलेति । श्वा = कुक्कुरः, पिण्डदस्य = भोजयितुः, 'पुरता' लाङ्गूलचालनम्, लाङ्गूलस्य = पुच्छस्य, चालनम् तत्, अधः = नीचैः, चरणावपातम् = पादयोः पतनम्, भूमौ = पृथिव्याम्, निपत्य = पतित्वा, वदनोदरदर्शनम्, वदनम् = मुखं च उदरम् = जठरं चेति तयोः दर्शनम् = प्रकटीकरणम् तत्, कुरुते = विधत्ते, राजपुङ्गवः = करिश्रेष्ठः 'पुङ्गवर्षभकुञ्जराः, सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' इत्यमरः, तु = पुनः, पिण्डदस्य 'पुरतः', धीरम् = गम्भीरं यथा स्यात्तथा, विलोकयति = पश्यति, चाटुशतैश्च = अनेकैरभ्यर्थनोपचारैश्च, भुङ्क्ते = अपि । वसन्ततिलकावृत्तम् ।

भावार्थः—अधमप्रकृतिर्जनः श्वेव भोजयितुः पुरः स्वीयां चञ्चलतां क्षुद्रताञ्च दर्शयति, उत्तमप्रकृतिः पुनर्गजराज इव गम्भीरतां मानिताञ्च प्रकटयतीति ।

भाषा—कुत्ता टुकड़ा देने वाले के सामने दुम हिलाता है, नीचे पैरों पर गिरता हैं, फिर पृथ्वी पर गिर कर मुख तथा पेट दिखाता है । ( परन्तु ) गजराज भोजन देनेवाले की ओर गम्भीरता के साथ देखता और सैकड़ों खुशामदों के बाद भोजन करता है ॥ ३१ ॥

'वंशोन्नतिकरणस्यैव पुंसो जन्म सफलमि'त्येवं निरूपयति—

परिवर्तिनि संसारे मृतः को वा न जायते ।
स जातो येन जातेन याति वंशः समुन्नतिम् ॥ ३२ ॥

अन्वयः—परिवर्तिनि संसारे को वा न मृतः, कः वा न जायते । ( किन्तु ) सः जातः', येन जातेन वंशः समुन्नति याति ।

व्याख्या—परिवर्तिनीति । परिवर्तिनि = परिवर्तनशीले नित्यमेव नूतनतां

भजमान इति यावत्, संसारे = जगति, को वा पुरुषः, न मृतः = न मृत्युं प्राप्तः, को वा पुरुषः न जायते = नोत्पद्यते । किन्तु सः = पुरुषः जातः = उत्पन्नः, येन जातेन = उत्पन्नेन सता, वंश = कुलम्, 'कुलान्यभिजनान्वयौ, वंशोऽन्ववायः सन्तानः' इत्यमरः, समुन्नतिम् = वृद्धिम् उत्कर्षम्, याति = प्राप्नोति । अनुष्टुपवृत्तम् ।

भावार्थः—संसारोऽयं जन्ममरणयोः क्षेत्रम् । अत्र जन्ममरणे प्रतिक्षणं भवत एव । तस्यैव पुनः सफलं जन्म, येन वंशोन्नतिः क्रियत इति ।

भाषा—इस परिवर्तनशील संसार में कौन नहीं मरता और कौन नहीं पैदा होता । ( परन्तु वास्तव में ) वही पैदा होता है, जिसके पैदा होने से वंश ( खानदान ) उन्नति को प्राप्त होता है ॥ ३२ ॥

'मनस्वी सर्वोत्कर्षेण जगति वर्तते, विजनवासेन शरीरत्यागमपि वा बहु मन्येत' इत्याह—

कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ ३३ ॥

अन्वयः—मनस्विनः कुसुमस्तबकस्य इव द्वयी वृत्तिः ( भवति ) । ( कुसुमस्तबकः इव ) ( सः ) सर्वलोकस्य मूर्ध्नि वा ( तिष्ठति ) वने एव वा शीर्यते ।

व्याख्या—कुसुमेति । मनस्विनः = विचारवतो मानिनः पुरुषस्य, कुसुमस्तबकस्येव; कुसुमानाम् = पुष्पाणां स्तबकः = गुच्छः, समूह इति यावत् तस्येव, द्वयी = द्विविधा, वृत्तिः = वर्तनं स्थितिः, वृत्तिर्वर्तनजीवने' इत्यमरः, भवति, पुष्पगुच्छ इव स मनस्वी पुरुषः सर्वलोकस्य = सकलजनस्य, मूर्ध्नि वा = मस्तके वा, तिष्ठति, वने एव वा, शीर्यते = शीर्णो भवति ।

भावार्थः—पुष्पगुच्छो यथा लोकानां मस्तकमारूढो भवति अथवा वन एव निवसन् म्लानतां गच्छति तथा मनस्वी जनः सर्वेभ्यः प्राप्तुं प्रयतते, एकाकी वा भूत्वा शरीरं त्यक्तुमिलषतीति ।

भाषा—मानी पुरुष की फूलों के गुच्छे की भाँति दो प्रकार की स्थिति होती है । वह या तो सबके सिर पर रहता है अथवा वन में ही मुरझा जाता है ( नष्ट हो जाता है ) ॥ ३३ ॥

'अधिकबले पराक्रमं दर्शयितुमिच्छुर्मनस्वी कष्टं प्राप्तोऽपि क्षुद्रानुपेक्ष्य महत्स्वेव स्वस्याक्रमणं करोती'ति सोदाहरणं दर्शयति—

सन्त्यन्येऽपि बृहस्पतिप्रभृतयः सम्भाविताः पञ्चषा-
स्तान् प्रत्येष विशेषविक्रमरुची राहुर्न वैरायते।
द्वावेव ग्रसते दिवाकरनिशाप्राणेश्वरौ भास्वरौ
भ्रातः! पर्वणि पश्य दानवपतिः शीर्षावशेषाकृतिः॥ ३४॥

अन्वयः—हे भ्रातः! पश्य, बृहस्पतिप्रभृतयः अन्येऽपि पञ्चषाः सम्भाविताः (ग्रहाः) सन्ति किन्तु विशेषविक्रमरुचिः शीर्षावशेषाकृतिः दानवपतिः 'एषः' राहुः तान् प्रति न वैरायते। भास्वरौ द्वौ दिवाकरनिशाप्राणेश्वरौ पर्वणि ग्रसते।

व्याख्या—सन्तीति। हे भ्रातः=हे मनुष्य! पश्य=विलोकय, बृहस्पतिप्रभृतयः=देवगुर्वाद्याः मङ्गलबुधगुरुशुक्रशनिरूपाः, पञ्चषाः=पञ्च षट् वा, 'बहुव्रीहौ सङ्ख्येये डजबहुगणात्' इति समासान्तो डच्प्रत्ययः, सम्भाविताः=श्रेष्ठाः, ग्रहाः सन्ति=वर्तन्ते, किन्तु, विशेषविक्रमरुचिः विशेषे=बलाधिके यः विक्रमः=शौर्यं तत्र रुचिः=अभिलाषः यस्य सः, शीर्षावशेषाकृतिः, शीर्षम्=शिर एव अवशेषः=अवशिष्टभागो यस्याः तादृशी आकृतिः=आकारः स्वरूपं यस्य तथाभूतः, दानवपतिः=दनुजानां स्वामी, 'एषः=प्रसिद्धः' राहुः=तन्नामक उपग्रहः तान् प्रति=बृहस्पत्यादीन् पञ्चषान् ग्रहान् विषयीकृत्य, तैः सहेति यावत्, न वैरायते=न वैरं करोति, 'शब्दवैरकलहाभ्रकण्डवमेघेभ्यः करणे' इत्यनेन क्यङ्प्रत्ययः, भास्वरौ=प्रकाशमानौ द्वौ=उभौ, दिवाकरनिशाप्राणेश्वरौ दिवाकरः=सूर्यः निशायाः=रात्रेः प्राणेश्वरः=वल्लभः चन्द्रश्चेति तौ, एव=केवलम्, पर्वणि=अमायां पूर्णिमायां च, ग्रसते=आक्रमते, आच्छादयतीत्यर्थः शार्दूलविक्रीडितं वृत्तम्।

भावार्थः—'मानी पुरुषो दीनां दशां प्राप्तोऽपि बलिष्ठेष्वेव पराक्रमं दर्शयति न च क्षुद्रेष्वि'ति राहुस्तेजस्विनां श्रेष्ठं सूर्यं चन्द्रमसञ्चैव पर्वकाले गृह्णाति, बृहस्पतिप्रभृतींश्च न किञ्चिद्विगणयतीति।

भाषा—हे भाई! देखो, बृहस्पति आदि और भी पाँच-छः प्रतिष्ठित ग्रह हैं किन्तु विशेष विक्रम दिखलाने का इच्छुक दानवराज राहु, जिसका

आकार शिर भर रह गया है, इनसे वैर नहीं करता, (बल्कि) प्रकाश
सूर्य और चन्द्रमा इन दो को ही पर्व के समय (अमावस्या और पूर्णिमा
दिन) ग्रसता है ॥ ३४ ॥

वहति भुवनश्रेणिं शेषः फणाफलकस्थितां
कमठपतिना मध्येपृष्ठं सदा स च धार्यते।
तमपि कुरुते क्रोडाधीनं पयोधिरनादरा-
दहह! महतां निःसीमानश्चरित्रविभूतयः ॥ ३५ ॥

अन्वयः—शेषः फणाफलकस्थितां भुवनश्रेणिं वहति, स च कमठपतिना स
मध्येपृष्ठं धार्यते, तमपि पयोधिः अनादरात् क्रोडाधीनं कुरुते। अहह! मह
चरित्रविभूतयः निःसीमानः (भवति)।

व्याख्या—वहतीति। शेषः=सहस्रफणः सर्पराजः, फणाफलकस्थिता
फणाः=सर्पशिरोभागात्मकाः फटा एव फलकम्=अतिमहती पट्टिका तस्मि
स्थिता=वर्तमाना ताम्, भुवनश्रेणिम्=भुवनानां पातालादिलोकानां श्रेणिः
पंक्तिः ताम्, 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी' इत्यमरः, श्रेणिशब्दः ईक
रान्तोऽपि, वहति=धारयति, स च=स पुनः शेषनागः कमठपतिना=विष्ण
रवतारभूतेन कच्छपराजेन, सदा=नित्यम्, मध्येपृष्ठम्=पृष्ठस्य मध्ये उद
पश्चाद्भाग इति यावत्, 'पारे मध्ये षष्ठ्या वा' इत्यनेन अव्ययीभावसमास
धार्यते = उह्यते, तमपि = कूर्मराजमपि, पयोधिः = समुद्रः, अनादरात्
लीलया अनायासमिति यावत्, क्रोडाधीनम् = अङ्कगतम्, भुजद्वयान्तराले इ
यावत्, 'न ना क्रोडं भुजान्तरम्' इत्यमरः, कुरुते=करोति। अहह=आश्च
र्यम्, महताम्=महात्मनाम्, चरित्रविभूतयः=कार्यविशेषसम्पदः, निःसीमानः=
निर्गता सीमा=मर्यादा याभ्यस्ताः अपरिमिता इति यावत्, भवन्ति
हरिणीवृत्तम्।

भावार्थः—जगति शक्तेर्न्यूनाधिकभावो सर्वतो दृश्यते, यथा फणासु सक
जगद्भारं धारयन्तं शेषं पृष्ठे वहन् कूर्मराजः समुद्रेण सलीलं निजाङ्कमारोप्यते
एतेन स्फुटं प्रतीयते 'महत्त्वस्येयत्ता न केनापि वर्णयितुं शक्ये'ति।

भाषा—शेषनाग अपने फनों के पटरे पर स्थित (पाताल आदि
लोकों की पंक्ति को धारण करते हैं, और उन्हें कच्छपराज अपनी पीठ

सदा लिये रहते हैं । उनको ( कच्छपराज को ) भी समुद्र बिना परिश्रम के गोद में रख लेता है। अहो! महान् लोगों के व्यापारों की विभूति ( महिमा ) अपरिमित होती है ।। ३५ ।।

'विपत्तिकाले दुःखिनं पित्रादिस्वजनं विहाय स्वप्राणरक्षणायान्यत्र गन्तुं नार्हति पुत्र' इति मैनाकपर्वतोदाहरणेनाह—

वरं पक्षच्छेदः समदमघवन्मुक्तकुलिश-
प्रहारैरुद्गच्छद्बहुलदहनोद्गारगुरुभिः ।
तुषाराद्रेः सूनोरहह! पितरि क्लेशविवशे
न चासौ सम्पातः पयसि पयसां पत्युरुचितः ॥ ३६ ॥

अन्वयः—तुषाराद्रेः सूनोः उद्गच्छद्बहुलदहनोद्गारगुरुभिः समदमघवन्मुक्त-कुलिशप्रहारैः पक्षच्छेदः वरम्, ( किन्तु ) अहह । पितरि क्लेशविवशे ( सति ) पयसां पत्युः पयसि असौ सम्पातः न च उचितः ।

व्याख्या—वरमिति । तुषाराद्रेः=हिमालयपर्वतस्य, सूनोः=पुत्रस्य मैनाकस्येत्यर्थः, उद्गच्छद्बहुलबहनोद्गारगुरुभिः, बहुलः=प्रचुरः स चासौ दहनः=अग्निः तस्य उद्गारः=उद्गिरणम् ज्वालेति यावत्, उद्गच्छन्=ऊर्ध्वं प्रसरन् यः बहुलदहनोद्गारः तेन गुरवः=अगुणीभूता असह्या इति यावत्, तैः समदमघवन्मुक्तकुलिशप्रहारैः, मदेन=गर्वेण सह वर्तमानः समदः स चासौ मघवा=इन्द्रः, 'इन्द्रो मरुत्वान् मघवा' इत्यमरः, तेन मुक्तम्=क्षिप्तं यत् कुलिशम्=वज्रम् 'वज्रमस्त्री स्यात् कुलिशम्' इत्यमरः, तस्य प्रहाराः=आघाताः तैः, पक्षच्छेदः, पक्षाणाम्=गरुताम् छेदः=विदारणम्, वरम्=मैनाक् प्रियः, किन्तु अहह=कष्टम् पितरि=हिमालये, क्लेशविवशे=कष्टेनाभिभूते सति, पयसां पत्युः=जलानां स्वामिनः समुद्रस्य, पयसि=जले, असौ=प्रसिद्धः, सम्पातः=पतनम् न च उचितः=न योग्यः शिखरिणीवृत्तम् ।

भावार्थः—पर्वतनां पक्षांश्छेत्तुं प्रवृत्तमिन्द्रं विलोक्य यन्मैनाकः पितरं विपद्गतं विहाय स्वात्मानं ततो गोपायितुं समुद्रे लीयते स्म, तत्तस्य नोचितम्, प्रत्युत तदानीमिन्द्रस्य पुरतोऽवस्थाय स्वपक्षयोश्छेदनमेव कर्तव्यमासीतेनः यतः पुत्रः पितुः साहाय्यं कर्तुमर्हतीति ।

**भाषा**—पर्वतराज ( हिमालय ) के पुत्र ( मैनाक ) के लिए ऊपर उठते हु अग्निपुञ्ज के उद्गार के कारण असह्य हो गये हुए, दर्पयुक्त इन्द्र द्वारा छोड़े गं वज्र के प्रहारों से,पंख कट जाना भी ठीक था परन्तु आह ! पिता के दुःखाभिभू होने पर (उसका) इस प्रकार समुद्र के जल में कूद पड़ना नहीं उचित था ॥३६

'अचेतनोऽपि परापमानं न सहते किमुत सचेतन' इति सोदाहरणमाह—

यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः ।
तत्तेजस्वी पुरुषः परकृतनिकृतिं कथं सहते ? ॥ ३७ ॥

**अन्वयः**—अचेतनः अपि इनकान्तः सवितुः पादैः स्पृष्टः यत् प्रज्वलति, त तेजस्वी पुरुषः परकृतनिकृतिं कथं सहते ?

**व्याख्या**—यदचेतन इति । अचेतनोऽपि = चैतन्यशून्योऽपि, इनकान्तः = सूर्यकान्तमणिः, सवितुः = रवेः, 'तपनः सविता रविः' इत्यमरः, पादैः = किरणै चरणैश्च, स्पृष्टः = सम्पर्कं प्राप्तः ताडितश्च सन्,यद् = यस्मात् कारणात्, प्रज्वलति प्रज्वलितः कोपपूर्णश्च भवति, तत् = तस्मात् कारणात्, तेजस्वी, तेजः = अपमानामर्षणरूपः सत्त्वसूचकः कश्चिदान्तरो गुणः सोऽस्यास्तीति तादृशः,पुरुषः = पुरुषार्थसम्पन्नो मनुष्यः परकृतनिकृतिम्, परैः = अन्यैः कृता = उपस्थापिता य निकृतिः = शठता अपमानो वा तम्, कथम् = केन प्रकारेण, सहते = उपेक्षते नोपेक्षत इत्यर्थः । आर्यावृत्तम् ।

**भावार्थः**—'सूर्यपादस्पर्शात्सूर्यकान्तमणिः प्रज्वलन् 'पददलितो भूत्वा कोऽपि तेजस्वी पराभवं सहमानस्तिष्ठती'त्येव द्योतयतीति ।

**भाषा**—जब जड़ सूर्यकान्तमणि भी सूर्य की किरणों (अथवा चरणों) से जाने पर प्रज्वलित हो उठता है, तो (चेतन) तेजस्वी पुरुष दूसरों द्वारा किये ग अपमान को कैसे सह सकता है ॥ ३७ ॥

'बालोऽपि तेजस्वी पराक्रमणायैव स्पृहयत' इत्याह—

सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ।
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥ ३८ ॥

**अन्वयः**—शिशुः अपि सिंहः मदमलिनकपोलभित्तिषु गजेषु निपतति सत्त्ववताम् इयं प्रकृतिः ( अस्ति ) खलुः वयः तेजसः हेतुः न ( भवति ) ।

व्याख्या--सिंहः इति। शिशुरपि = अत्यल्पवयस्कोऽपि, सिंह = केसरी, मदमलिनकपोलभित्तिषु, मदेन = मदसलिलेन मलिनाः = श्यामाः कपोलभित्तयः गण्डस्थलानि येषां तेषु, गजेषु = हस्तिषु, निपतति = आक्रम्योपरि तिष्ठति, सत्त्ववताम् = बलशालिनाम्, इयम् = पूर्वोक्ता विक्रमदर्शनरूपा, प्रकृतिः = स्वभावः, अस्ति, खलु = निश्चयेन, वयः = अवस्था, तेजसः = प्रतापस्य, हेतुः = कारणम्, न = न भवति। आर्यावृत्तम्।

भावार्थः—सिंहः स्वल्पवया अपि गजामाक्रम्य स्वीयं शौर्यं दर्शयति, यतः सत्त्ववान् मानी प्राणी शत्रुं तिरस्कृत्यैव निर्वृतिं लभते। तेजो हि न वयः सापेक्षम् तत्तु मानिनः स्वभावगतो धर्म एवेति।

भाषा—सिंह बच्चा होने पर भी मद से काले गण्डस्थलवाले हाथियों पर आक्रमण करता है। ठीक है, शत्रुओं पर आक्रमण करना शक्तिशालियों का स्वभाव ही होता है। अवस्था तेज का कारण नहीं होती॥ ३॥

इदानीं धनस्य महिमानमवस्योपादेयत्वं च वर्णयति—

जातिर्यातु रसातलं गुणगणैस्तत्राप्यधो गम्यतां
शीलं शैलतटात् पतत्वभिजनः सन्दह्यतां वह्निना।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु न केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे॥ ३९॥

अन्वयः—जातिः रसातलं यातु, गुणगणैः तद् अपि अधः गम्यताम्, शीलं शैलतटात् पततु; अभिजनः वह्निना सन्दह्यताम्, वैरिणि शौर्ये आशु वज्रं निपततु, अर्थः नः केवलम् अस्तु, येन एकेन विना इमे समस्ताः गुणाः तृणलवप्रायाः (भवन्ति)।

व्याख्या—जातिरिति। जातिः = ब्राह्मणत्वादिः साधारणो धर्मः, रसातलम् = भुवस्तलं पातालम्, यातु = गच्छतु, गुणगणैः, गुणानाम् = धैर्यौदार्यादीनाम् गणैः = समुदायैः, 'समुदायः समुदयः समवायश्चयो गणः' इत्यमरः, तत्रापि = रसातलेऽपि तदपेक्षयेति यावत्, अधः = नीचैः प्रदेशे, गम्यताम् = प्रयाणं क्रियताम्, शीलम् = सद्वृत्तम्, 'शीलं स्वभावे सद्वृत्ते' इत्यमरः, शैलतटात् = पर्वतप्रान्तभागात्, पततु = भ्रश्यतु, अभिजनः = कुलम्, वह्निना = अग्निना, सन्दह्यताम् = भस्मीक्रियताम्, वैरिणि = शत्रुभूते, शौर्ये =

पराक्रमे, आशु = शीघ्रम्, वज्रम् = कुलिशम्, पततु = पतितं भवतु, अर्थः = धनम्, सः = अस्माकम्, केवलम् = सर्वविच्छेदेन, एकं तदेवेत्यर्थः, अस्तु = वर्तताम्, एकेन = अद्वितीयेन, येन = धनेन, 'पृथग्विनानानाभिस्तृतीयान्य-तरस्याम्' इति तृतीया, विना = अन्तरेण, 'पृथग्विनान्तरेर्त्ते' इत्यमरः, इमे = पूर्वोक्ता जात्यादयः, समस्ता गुणाः = सर्वे गुणाः, तृणलवप्रायाः = तृणस्य लेशेन सदृशाः तुच्छा इति यावत्, भवन्ति । शार्दूलविक्रीडितं वृत्तम् ।

भावार्थः—संसारेऽस्मिन् धनस्यैव प्राधान्यं वर्तते जात्यादिकं नश्यतु नाम तेन विना न कापि हानिर्भवति । गुणा सन्तोऽपि धनाभावे न शोभन्ते, अतः सर्वैर्धनमेव सम्पादनीयमिति ।

भाषा—जाति रसातल को चली जाय, गुणों का समूह उससे भी नीचे चला जाय, शील ( सदाचार ) पहाड़ के किनारे पर से गिर जाय, वंश में आग लगा दी जाय, शत्रुस्वरूप शौर्य ( वीरता ) पर शीघ्र वज्रपात हो जाय । ( इस प्रकार कुल भले ही नष्ट हो जाय परन्तु ) हम लोगों के पास केवल धन रह जाय, जिस एक ( धन ) के विना ये सारे गुण तुच्छ तृण के समान हो जाते हैं ॥ ३९ ॥

'धनहीनः पुरुषो विचित्रामेव काञ्चिदवस्थां कलयती'ति दर्शयति—

तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव ।
अर्थोष्मणा विरहितः पुरुषः क्षणेन
सोऽप्यन्य एव भवतीति विचित्रमेतत् ॥ ४० ॥

अन्वयः—अविकलानि तानि इन्द्रियाणि; तत् एव नाम, अप्रतिहता सा बुद्धिः, तदेव वचनम् ( किन्तु ) अर्थोष्मणा विरहितः सः अपि पुरुषः क्षणेन अन्यः एव भवति—इति एतत् विचित्रम् ( अस्ति ) ।

व्याख्या—तानीति । अविकलानि = विकाररहितानि पूर्ववदेव शक्ति-मन्तीति यावत्, तानि = प्रसिद्धानि; इन्द्रियाणि = चक्षुराद्यानि करणानि, तदेव = पूर्वसिद्धमेव, नाम = अभिधानम्, 'अभिधानं च नामधेयं च नाम च' इत्यमरः, अप्रतिहता = अकुण्ठिता सर्वतः प्रसरन्ती, सा = पूर्वसदृशी, बुद्धिः =

ज्ञा, तदेव = पूर्वदेव, वचनम् = उक्तिः 'उक्तिर्लपितं भाषितं वचनं वचः' त्यमरः, किन्तु अर्थोष्मणा, अर्थस्य = धनस्य ऊष्मा = उष्णता मद इति वत्, तेन, विरहितः = विनाकृतः, सोऽपि = स एव, पूर्ववदेव हस्तपादाद्य-यवैः सम्पन्नः इत्यर्थः, पुरुषः = मनुष्यः, क्षणेन = निमेषमात्रेण, अन्य एव = र्वावस्थातो भिन्न एव, भवति = सञ्जायते, इत्येतद् = पूर्वोक्तमिदम्, विचित्रम् = ाश्चर्यकरम् अस्ति । वसन्ततिलकावृत्तम् ।

भावार्थः—इन्द्रियादिषु यथापूर्वं वर्तमानेष्वपि धनस्याभावेन मनुष्यः वरूपेणैव नश्यतीत्यो धनं संसारिणां परमावश्यकमिति ।

भाषा—वे ही पहले जैसी इन्द्रियाँ रहती हैं, वही नाम रहता है, वैसे ही कुण्ठित बुद्धि रहती है, वही बोली रहती है, परन्तु यह विचित्र है कि वही ादमी धन की गर्मी शान्त होने पर क्षण भर में कुछ दूसरा ही हो ाता है ।

'गुणहीनोऽपि धनवान् गुणवानेवे'ति प्रतिपादयति—

यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ११॥

अन्वयः—यस्य ( समीपे ) वित्तम् अस्ति, स नरः कुलीनः, स पण्डितः, स श्रुतवान् ( सः ) गुणज्ञः, स एव वक्ता, स च दर्शनीयः ( भवति ) सर्वे गुणः, काञ्चनम् आश्रयन्ति ।

व्याख्या—यस्येति । यस्य = पुरुषस्य समीपे, वित्तम् = धनम्, अस्ति = विद्यते, सः नरः = मनुष्यः, कुलीनः = सत्कुलोत्पन्नः, सः पण्डितः = प्राज्ञः 'प्राज्ञः सङ्ख्यावान् पण्डितः' इत्यमरः, सः श्रुतवान्, श्रुतम् = शास्त्रम् अस्या-स्तीति तादृशः अधीतविद्यो विद्वान्, स गुणज्ञः = गुणानां ज्ञाता, स एव वक्ता = वाक्शक्तिसम्पन्नः, स च = पुनः स पुरुषः, दर्शनीयः = द्रष्टुं योग्यः सुन्दरः भवति । सर्वे गुणाः = कुलीनत्वादयः समस्ता गुणाः काञ्चनम् = सुवर्णं धनम्, आश्रयन्ति = सेवन्ते, तत्रैव निवसन्तीत्यर्थः । उपजातिवृत्तम् ।

भावार्थः—कुलीनत्वादयो हि गुणा धनं विना न प्रकाशन्ते । धनेनैव नूनं मनुष्यः कुलीनत्वादिगुणवत्त्वसंकेतं प्राप्नोतीति ।

भाषा—जिसके पास धन है वही कुलीन ( अच्छे कुल में उत्पन्न ) है,

वहीं विद्वान् है, वही शास्त्रज्ञ है, वही गुणों का जानकार है, वही बोल
वाला है और वही देखने योग्य भी है। सब गुण सुवर्ण ( धन ) में
बसते हैं ॥ ४१ ॥

धनस्य विनाशकारणमिदानीमुदाहरणमुखेन दर्शयति—

दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात् सुतो लालना-
द्विप्रोऽनध्ययनात् कुलं कुतनयाच्छीलं खलोपासनात्।
ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रया-
न्मैत्री चाप्रणयात् समृद्धिरनयात्त्यागप्रमादाद्धनम् ॥ ४२ ॥

अन्वयः—नृपतिः दौर्मन्त्र्यात्, यतिः सङ्गात्, सुतः लालनात्, वि
अनध्ययनात्, कुलं कुतनयात्, शीलं खलोपासनात्, ह्रीः मद्यात्, कृषिः अ
अनवेक्षणात्, स्नेहः प्रवासाश्रयात्, मैत्री अप्रणयात्, समृद्धिः अनयात् धनं
त्यागप्रमादात्[1] विनश्यति।

व्याख्या—दौर्मन्त्र्यादिति। नृपतिः=राजा, दौर्मन्त्र्यात्, दुष्टः=यथो
चितमप्रयुक्तः मन्त्र=कार्यसिद्धिविषयको गुप्तविचारः यस्य सः तस्य भाव
दौर्मन्त्र्यं तस्मात्=दुर्मन्त्रसेवनात् कारणात्, यतिः=शमदमादिसम्पन्न
जितेन्द्रियः पुरुषः, सङ्गात्=लोकसम्पर्कात्, सुतः=पुत्रः, लालनात्=स्नेह
विशेषपूर्वकं पालनात्, विप्रः=ब्राह्मणः अनध्ययनात्=वेदशास्त्राध्ययनरूप
स्वाध्यायाभावात्, कुलम्=वंशः, कुतनयात्=अनुचितकार्यकारिणः पुत्रात
शीलम्=सदाचारः, खलोपासनात्=दुष्टजनसहवासात्, ह्रीः=लज्जा, 'मन्दा
ह्रीस्त्रपा व्रीडा लज्जा' इत्यमरः, मद्यात्=मद्यपानादिति यावत्, कृषिरपि=
हलकर्षणादिना सम्पाद्यमानो वृत्तिविशेषोऽपि, अनवेक्षणात्=पुनः पुनः पर्यालो
चनाभावात् स्नेहः=प्रेम, प्रवासाश्रयात्, परदेशवासात्, मैत्री=मित्रता
अप्रणयात्=स्नेहाभावात्, समृद्धिः=धनधान्यसुखादिवृद्धिः, अनयात्=नीति
विरुद्धाचरणात्, धनं च=वित्तं च त्यागप्रमादात् त्यागे=दाने प्रमादः=

१. सर्वत्र 'त्यागात्प्रमादाद्धनम्' इति पाठो दृश्यते। परमर्थानौचित्येन
श्रीमद्गुरुवरसङ्केतादुपेक्षितो नूतनश्च पाठः सन्निवेशितः।

अवधानराहित्यं तस्मात्, विनश्यति = विनाशं दुरवस्थां गच्छतीति यावत्। शार्दूलविक्रीडितं वृत्तम्।

भावार्थः—राज्ञा सन्मन्त्रप्रयोगः कर्तव्यः यतिना लोकसंसर्गः परिहरणीयः, पुत्रस्यानुचितं लालनं न कार्यम्, विप्रेण स्वाध्यायोऽध्येतव्यः, वंशोन्नतिं कर्तुकामेन सुपुत्रेण भवितव्यम्, सदाचारिभिर्दुर्जनसंसर्गस्त्याज्यः, विनयार्थिभिः मद्यं न पेयम्, कृषिः पुनः पुनरवेक्षणीया, स्नेहार्थिभिश्चिरं परदेशं न स्थातव्यम्, मित्रताभिरक्षणाय स्नेहः संवर्धनीयः, समृद्ध्यर्थं नीतिरनुसरणीया तथा धनं रक्षितुकामैः सत्पात्रेभ्यो वितरणेऽवधानं च सततं कर्तव्यमिति।

भाषा—अनुचित सलाह को मानने से राजा, लोगों के सम्बन्ध से योगी, दुलार करने से पुत्र, अध्ययन न करने से ब्राह्मण, कुपुत्र से वंश, दुष्टों के उपासन ( विशेष सम्पर्क ) से अच्छा आचरण, शराब पीने से लज्जा, बार-बार न देखने से खेती, परदेश में अर्थात् दूर रहने से प्रेम, स्नेह के न होने से मित्रता, अनीति से ऐश्वर्य और दान में असावधानता से धन नष्ट हो जाता है ॥ ४२ ॥

धनस्यावस्थात्रयं प्रदर्शयति—

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ ४३ ॥

अन्वयः—धनस्य दानं भोगः नाशः ( इति ) तिस्रः गतयः भवन्ति। यः ( धनं ) न ददाति न भुङ्क्ते तस्य तृतीया गतिः भवति।

व्याख्या—दानमिति। धनस्य = वित्तस्य, दानम् = वितरणम्, भोगः = स्वीयसुखार्थं विनियोगः, नाशः = स्वसकाशान्निर्गमनम्, इति तिस्रः = त्रिसङ्ख्याकाः, गतयः = अवस्थाः मार्गा इति यावत् भवन्ति = जायन्ते, यः = पुरुषः, धनं न ददाति = न वितरति परार्थे न विनियुङ्क्ते, न भुङ्क्ते = नानुभवति स्वार्थे न विनियुङ्क्ते, तस्य = धनिनो धनस्य, तृतीया = नाशरूपा गतिः = अवस्था परिणाम इति यावत्, भवति = जायते। आर्यावृत्तम्।

भावार्थः—धनं दातव्यं भोक्तव्यं च, अन्यथा चौर्यादिना तन्नश्यतीति।

भाषा—देना, भोग करना ( उपयोग में लाना ) और नष्ट हो जाना–धन

की ये तीन गतियाँ (दशायें) होती हैं। जो न (दान) देता है, न भोग करता है, उसकी अर्थात् उसके धन की तीसरी गति हो जाती है अर्थात् उसका नाश हो जाता है ॥ ४३ ॥

'दानेन विभवक्षयोऽपि शोभावह एवे'त्येतदुदाहरणोपन्यासपुरःसरं निरूपयति—

मणिः शाणोल्लीढः समरविजयी हेतिदलितो
गदक्षीबो[1] नागः शरदि सरितः श्यानपुलिनाः।
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नराः ॥ ४४ ॥

अन्वयः—शाणोल्लीढः मणिः, हेतिदलितः समरविजयी, मदक्षीबः नागः, शरदि श्यानपुलिनाः सरितः, कलाशेषः चन्द्रः, सुरतमृदिता बालवनिता, अर्थिषु गलितविभवाः नराः च (एते सर्वे) तनिम्ना शोभन्ते।

व्याख्या—मणिरिति। शाणोल्लीढः, शाणे=रत्नाद्युत्तेजनाय घर्षणस्य साधनीभूते यन्त्रविशेषे उल्लीढः=उल्लिखितो घृष्ट इति यावत्, मणिः=रत्नम्, हेतिदलितः=शस्त्राहतः, समरविजयी=युद्धे बिजयं प्राप्तः, शूरो योद्धा, मदक्षीबः, मदेन=मदजलेन क्षीबः=मत्तः, 'मत्ते शौण्डोत्कटक्षीबाः' इत्यमरः, नागः=गजः, शरदि=शरद्‌तौ, श्यानपुलिनाः, श्यानानि=शुष्काणि पुलिनानि=तोयादुत्थितास्तटप्रदेशाः यासां ताः, 'तोयोत्थितं तत्पुलिनम्' इत्यमरः, सरितः=नद्यः, कलाशेषः=कलामात्रेणावशिष्ट एककलात्मकः, चन्द्रः=चन्द्रमाः, सुरतमृदिता, सुरते=रतिक्रीडायाम् मृदिता=शिथिलीकृतशरीरा, बालवनिता=मुग्धा स्त्री, अर्थिषु=याचकेषु, गलितविभवा; गलितः=व्ययीभूतः विभवः=धनम् येषां ते, नराश्च=उदाराः पुरुषाश्च-एते सर्वे, तनिम्ना=कृशत्वेन, तनोर्भावः तनिमा, भावार्थे इमनिच् प्रत्ययः, 'लक्षणं दभ्रं कृशं तनु' इत्यमरः, शोभन्ते=विभान्ति। शिखरिणीवृत्तम्।

---

१. सर्वत्र 'मदक्षीण' इति पाठः परन्तु पूर्वोक्तस्यैव पाठस्य स्वारस्यं स्वानुभवसंवशम्।

भावार्थः—प्रायो जगति सर्वाणि वस्तूनि महत्त्वेन शोभमानानि दृश्यन्ते, किन्तु शाणोल्लीढमणिप्रभृतयो विशेषतश्चार्थिसात्कृतवित्ता नरास्तनुत्वेनैव शोभां प्राप्नुवन्ति । तनुत्वमेवैतेषां भूषणमिति ।

भाषा—सान पर खरादा गया रत्न, शस्त्रों द्वारा घायल किया गया समरविजेता, मदमस्त हाथी, शरद् ऋतु में कुछ-कुछ सूख गये हुए किनारों वाली नदी, रतिक्रीड़ा में दली-मली गई नवयौवना स्त्री और याचकों में धन का व्यय करने वाले पुरुष—ये सब कृशता से ही शोभित होते हैं ।। ४४ ।।

'अवस्थानुसारं वस्तूनां मूल्यं न्यूनमधिकं वा भवती'त्याह—

परिक्षीणः कश्चित् स्पृहयति यवानां प्रसृतये
स पश्चात्सम्पूर्णः कलयति धरित्रीं तृणसमाम् ।
अतश्चानैकान्त्याद् गुरुलघुतयाऽर्थेषु धनिना-
मवस्था वस्तूनि प्रथयति प्रथयति च सङ्कोचयति च ।।४५।।

अन्वयः—कश्चित् परिक्षीणः यवानां प्रसृतये स्पृहयति, पश्चात् सः सम्पूर्णः धरित्रीं तृणसमां कलयति । अतः च अर्थेषु अनैकान्त्यात् गुरुलघुतया धनिनाम् अवस्था वस्तूनि प्रथयति च सङ्कोचयति च ।

व्याख्या—परिक्षीण इति । कश्चित्=कोऽपि पुरुषः, परिक्षीणः=निर्धनः सन्, यवानाम्=धान्यविशेषाणाम्, प्रसृतये=निःशेषे कुब्जीकृताय पाणये अर्धाञ्जलये इति यावत्, 'पाणिर्निकुब्जः प्रसृतिः' इत्यमरः 'स्पृहेरीप्सितः' इत्यनेन चतुर्थी, स्पृहयति=अभिलषति, पश्चात्=कालक्रमेण, सः=परिक्षीणः पुरुषः, सम्पूर्णः=समृद्धः सन्, धरित्रीम्=वसुन्धराम्, तृणसमाम्=तृणतुल्यां तुच्छाम्, कलयति=मन्यते । अतश्च=अस्मादेव हेतोः, च शब्द एवार्थे, अर्थेषु=पदार्थेषु यवधरित्रीप्रभृतिष्विति यावत्, अनैकान्त्यात्=एकान्तस्य भाव ऐकान्त्यम् न ऐकान्त्यम् अनैकान्त्यं तस्मात् अनिश्चितत्वेन अनियतरूपत्वेनेति यावत्, भावार्थे ष्यञ् प्रत्ययः, गुरुलघुतया=गुरुत्वेन लघुत्वेन च हेतुना, धनिनाम्=धनवताम्, अवस्था=उत्तमा अधमा वा दशा, वस्तूनि=पदार्थान्, प्रथयति च=बिस्तारयति गुरूकरोति च, सङ्कोचयति च=लघूकरोति च । शिखरिणीवृत्तम् ।

भावार्थ:—वस्तूनां गुरुत्वं लघुत्वं वा नियतं नास्ति, मनुष्याणामवस्था विशेषेणैव तेषां मूल्यं वर्धते क्षीयते वेति।

भाषा—एक दरिद्र आदमी पसर भर जौ के लिए लालायित रहता है वह फिर सम्पन्न होने पर दुनिया को तृण के समान समझता है। (इसलिए पदार्थों में छोटाई और बड़ाई के विषय में अव्यवस्था होने के कारण धनि की अवस्था ही वस्तुओं को बड़ी तथा छोटी बनाती है॥ ४५॥

इदानीं 'प्रजापालनमेव राज्ञः सर्वार्थसाधन'मित्याशयेनाह—

राजन्! दुधुक्षसि यदि क्षितिधेनुमेतां
तेनाद्य वत्समिव लोकममं पुषाण।
तस्मिंश्च सम्यगनिशं परिपोष्यमाणे
नानाफलैः फलति कल्पलतेव भूमिः॥ ४६॥

अन्वयः—हे राजन्! यदि (त्वम्) एतां क्षितिधेनुं दुधुक्षसि, तेन अ वत्समिव अमुं लोकं पुषाण। तस्मिन् च अनिशं सम्यक् परिपोष्यमाणे (सति भूमिः कल्पलता इव नानाफलैः फलति।

व्याख्या—राजन्निति। हे राजन्! हे नृप! यदि=चेत्, त्वम्, एताम्= सर्वाश्चर्यभूताम्, क्षितिधेनुम्, क्षितिधेनुरिव=गोसदृशी पृथ्वी ताम्, दुधुक्षसि= दोग्धुमिच्छसि, दुह् धातोः सन्प्रत्ययः, तेन=तर्हीत्यर्थः, अद्य=अस्मिन्समं वत्समिव=तर्णकमिव, अमुम्=उपलभ्यमानम्, लोकम्=प्रजावर्गम् पुषाण= पोषणपूर्वकं पालय। अस्मिंश्च=लोके च, अनिशम्=नित्यम्; सम्यक्=उत्त प्रकारेण, परिपोष्यमाणे सति=परिपाल्यमाने सति, भूमिः=पृथ्वी, कल्पलते कल्पवल्लीव, नानाफलैः=अनेकप्रकारैः सस्यादिरूपैः फलैः, फलति=सम्पू समृद्धा भवति। वसन्ततिलकावृत्तम्।

भावार्थः—पृथ्वी रत्नगर्भा कथ्यते, तानि रत्नानि तस्या उद्धर्तुं रा प्रजापालनमपेक्षणीयम्, तद्द्वारैव तदुद्धारसम्भवात्। यथा वत्सेषु जीवत्सु गौर्दु दातुं प्रभवति तथैव प्रजाजनेषु सुखं जीवत्स्वेव तेभ्यः कृष्यादिद्वारा राज्ञा सस्य दिफलं सम्प्राप्तुं शक्यमिति।

भाषा—हे राजा! यदि इस पृथ्वीरूपी गाय को दुहने की इच्छा क

हो तो इस समय बछड़े के तुल्य इस प्रजावर्ग का पोषण करो। प्रजावर्ग का नित्य अच्छी तरह पालन करने पर ही पृथ्वी कल्पलता की भाँति अनेक प्रकार के फलों को देती है ॥ ४६ ॥

राजनीतेरनेकरूपत्वमुदाहरणेन स्फुटीकरोति—

सत्याऽनृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या।
नित्यव्यया प्रचुरनित्यधनागमा च
वाराङ्गनेव नृपनीतिरनेकरूपा ॥ ४७ ॥

अन्वयः—सत्या अनृता च परुषा प्रियवादिनी च हिंस्रा दयालुः अपि च अर्थपरा वदान्या नित्यव्यया प्रचुरनित्यधनागमा च एवं नृपनीतिः वाराङ्गना इव अनेकरूपा ( अस्ति )।

व्याख्या—सत्येति। सत्या = यथार्थरूपेण वर्तमाना, अनृता च = अयथार्थरूपेण वर्तमाना च, परुषा = कठोरभाषिणी, प्रियवादिनी च = मधुरभाषिणी च, हिंस्रा = घातुका, 'शरारुर्घातुको हिंस्रः' इत्यमरः, दयालुः, = कृपावती, अपि च = अन्यच्च अर्थपरा = धनपरायणा, वदान्या च = दानशौण्डा च, 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्यमरः, नित्यव्यया नित्यम् = सततं व्ययः = कार्येषु धनस्य विनियोगः यस्याः तादृशी, प्रचुरनित्यधनागमा च, प्रचुर = बहुः नित्यम् = सर्वदा धनागमः = अर्थप्राप्तिः यस्याः यस्यां वा सा च = एवम्, नृपनीतिः = राजनीतिः, वाराङ्गनेव = वेश्येव, 'वारस्त्री गणिका वेश्या' इत्यमरः अनेकरूपा अनेकानि = परस्परविरुद्धानि बहूनि रूपाणि = स्वरूपाणि यस्याः तथाभूता। अस्ति। वसन्ततिलकावृत्तम्।

भावार्थः = सत्यासत्यादिभिः परस्परविरुद्धैर्द्वन्द्वगुणैरञ्चिता राज्ञो नीतिर्वेश्येव नानारूपैः शोभते। यथा वेश्या क्वचित्कदाचित्सत्यं क्वचिदसत्यं क्वचिच्च सत्याऽसत्यसंमिश्रं तथा कठोरं मधुरं तदुभयसाधारणं च वचः प्रयुङ्क्ते निर्दयतां दयालुतां लोभमौदार्यं च यथासमयं दर्शयति, प्रसङ्गानुसारं धनस्य व्ययभावं च सम्पादयति, तथैव राजनीतिरप्यावश्यकतानुसारं सत्यम-

सत्यं च भावं प्रकटयन्ती निषेधविध्यात्मकेषु क्वचिदर्थेषु कठोरतां मधुरतां धारयन्ती, दण्डप्रजासंरक्षणाभ्यां क्रूरतां मधुरतां च दर्शयन्ती, धनस्य व्ययं सङ्च यथावत्कर्तुमुपदिशतीति ।

भाषा--कभी सच्चे, कभी झूठे, कभी कठोर वचन बोलनेवाली, कभी मं वचन बोलनेवाली, कभी घातक, कभी दयायुक्त; कभी स्वार्थरत, कभी दान दक्ष, नित्य व्यय करनेवाली तथा नित्य ही प्रचुर धन पैदा करनेवाली--इस प्रक राजनीति वेश्या की भाँति अनेकरूपवाली होती है ॥ ४८ ॥

'आज्ञादिभिर्वक्ष्यमाणैः षड्भिर्गुणैः सम्पन्न एवं राजा समाश्रयणीय' इत्याह-

आशा कीर्तिःपालनं ब्राह्मणानां दानं भोगो मित्रसंरक्षणं च !
येषामेते षड्गुणा न प्रवृत्ताः कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥ ४८ ॥

अन्वयः--हे पार्थिव ! आज्ञा कीर्तिः ब्राह्मणानां पालनं दानं भोगः मि संरक्षणं च—एते षड्गुणाः येषां (मध्ये) न प्रवृत्ताः ( सन्ति ), तेषाम् उपाश्रये कः अर्थः ?

व्याख्या:--आज्ञेति । हे पार्थिव=पृथिव्या ईश्वरः, तत्सम्बुद्धौ हे राजन् 'तस्येश्वरः' इत्यधिकारे 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यनेन अञ् प्रत्ययः, आज्ञा शासनम्, कीर्तिः=यशः, ब्राह्मणानाम्=विप्राणाम्, पालनम्=रक्षणम्, दानम्= सत्पात्रेभ्यो धनादिवितरणम्, भोगः=ऐश्वर्योपभोगः, मित्रसंरक्षणं च, मित्राणाम्= सुहृदाम्, संरक्षणम्=सम्यक् पालनञ्च, एते=अमी पूर्वोक्ताः, षट्=षट्सङ्ख्याका गुणाः, येषाम्=राज्ञाम्, मध्ये, न प्रवृत्ताः=नोपस्थिताः सन्ति, तेषाम्=तादृशान राज्ञाम्, उपाश्रयेण=सेवनेन, कः अर्थ,=को लाभः अस्ति ? न कोऽपीत्यर्थः । शालिनीवृत्तम् ।

भावार्थः—शासनशक्त्या यशसा मित्रब्राह्मणसंरक्षणप्रेरणा दानेन भोगेन विरहितानां राज्ञामकिञ्चित्कराणां सेवनं व्यर्थमेवेति ।

भाषा—हे राजन् ! जिनमें ( जिन राजाओं में ) आज्ञा ( शासन ) करना यश प्राप्त करना, ब्राह्मणों का पालन करना, दान देना, ऐश्वर्य का उपभोग करना तथा मित्रों की रक्षा करना—ये छः गुण नहीं मिलते उनका आश्रय लेने क्या लाभ ? ॥ ४८ ॥

'सञ्चितकर्मानुसारमेव धनं लभ्यते लोके, न्यूनं ततो नाप्यधिकमि'ति प्रतिपादयन्नाह—

यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोतिमरुस्थलेऽपि नितरां मेरौ ततो नाधिकम् ।
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥ ४९ ॥

अन्वयः—धात्रा निजभालपट्टलिखितं स्तोकं महद् वा यत् धनम् अस्ति तत् ( मनुष्यः ) मरुस्थले अपि नितरां प्राप्नोति, ततः अधिकं मेरौ ( अपि ) न ( प्राप्नोति )। तत् ( हे मनुष्य ) धीरः भव, वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः। पश्य, घटः कूपे पयोनिधौ अपि तुल्यं जलं गृह्णाति।

व्याख्या—यद्धात्रेति। धात्रा=ब्रह्मणा, निजभालपट्टलिखितम्, निजम्=स्वीयं यद् भालपट्टम्=ललाटपट्टं तस्मिन् लिखितम्=अङ्कितम्, स्तोकम्=अल्पम्, स्तोकाल्पक्षुल्लका' इत्यमरः, 'महत्=अधिकं वा यद् धनम्=वित्तम् अस्ति, तत्=तावन्मात्रं धनम् मनुष्यः मरुस्थलेऽपि=निर्जले धन्वदेशेऽपि 'समानौ मरुधन्वानौ' इत्यमरः, नितराम्=अतिशयेन, अवश्यमित्यर्थः, प्राप्नोति=लभते; ततः=ब्रह्मलिखितात्, अधिकम्=अतिशयितम्, मेरा वपि=सुवर्णपर्वतेऽपि न प्राप्नोति। तत्=तस्मात्कारणात्, हे मनुष्य! धीरः=गम्भीरः स्थिरचित्तः, भव=जायस्व, वित्तवत्सु=धनिषु, धनिनां पुर इति यावत् 'तदस्यास्ती'ति मतुप्प्रत्ययः, कृपणाम्=दीनाम्, वृत्तिम्=वर्तनं व्यापारम्, वृथा=व्यर्थम्, मा कृथाः=न कुरु, 'माङि लुङ्' इत्यनेन माङ्योगे लुङ् 'न माङ्योगे' इत्यनेन अडागमप्रतिषेधः। पश्य=विलोकय, घटः=कलशः, कूपे=प्रहौ, 'पुंस्येवान्धुः प्रहिः कूप' इत्यमरः, पयोनिधावपि=समुद्रेऽपि, तुल्यम्=समानम, जलम्=सलिलम्, गृह्णाति। आदत्ते। शार्दूलविक्रीडितं वृत्तम्।

भावार्थः—दैवलिखितानुसारमेव धनं सर्वत्र सर्वदा सर्वासु दशासु लभ्यते लोकेः, यथाहि घटेन सागरे कूपेऽपि तुल्यमेव जलं गृह्यते। अतो धनिकानां पुरो व्यर्थं दैन्यं न प्रदर्शनीयमिति।

**भाषा**—ब्रह्मा ने थोड़ा या अधिक जो कुछ धन अपने ललाट ( भाग्य ) में लिख दिया है उसे पुरुष मरुभूमि में भी अच्छी तरह पा सकता है। और उससे अधिक सुमेरु पर्वत पर भी नहीं पाता। इसलिए धीर बनो ( धैर्य धारण करो ), धनियों के सामने व्यर्थ दीनवृत्ति का आश्रय न लो। देखो कुएँ और सागर दोनों में से घड़ा बराबर पानी लेता है ॥ ४९ ॥

'अर्थिनां दीनवचसां श्रवणं विनैव दाता तेभ्यो दातुमर्हती'ति मेघान्योक्त्याह—

त्वमेव चातकाधारोऽसीति केषां न गोचरः।
किमम्भोदवरास्माकं कार्पण्योक्तिं प्रतीक्षसे ॥ ५० ॥

**अन्वयः**—हे अम्भोदवर ! 'त्वम् एव चातकाधारः असि' इति केषां गोचरः न ( अस्ति, तत् ) अस्माकं कार्पण्योक्तिं किं प्रतीक्षसे ?

**व्याख्या**—त्वमेति। हे अम्भोदवर ! अम्भः=पानीयम्, 'अम्भोऽर्णस्तोयपानीय' इत्यमरः, ददति=वर्षन्ति ते अम्भोदाः तेषु वरः श्रेष्ठः तत्सम्बुद्धौ, श्रेष्ठ मेघ ! त्वम्, एव=केवलम्, चातकाधारः, चातकानाम्=पक्षिणां सारंगाणां 'सारङ्गस्तोककश्चातकः खगाः' इत्यमरः, आधारः=आश्रयभूतो रक्षकः, असि=वर्तसे, इति=एवम्, केषाम्=पुरुषाणाम्, न गोचरः=न ज्ञातम् गोचरशब्दस्य नित्यपुंस्त्वम्, तत्=तस्मात् कारणात्, अस्माकम्=नः कार्पण्योक्तिम्=दीनतामय वचनम्, किम्=किमर्थम्, प्रतीक्षसे=अनुपालयसि, श्रोतुमिच्छसीत्यर्थः। अनुष्टुब्वृत्तम्।

**भावार्थः**—'अस्माकं त्वमेवाश्रयोऽसी'त्येवं दीनं वचनमाश्रितानां न कदापि श्रोतुमभिलषणीयमाश्रयदातृभिः सत्वरं च तेषामभीष्टं पूरणीयमिति।

**भाषा**—यह किसे नहीं मालूम कि केवल तुम्हीं पपीहों के आधार हो। तो हे श्रेष्ठ मेघ ! हमारे दीनवचनों की प्रतीक्षा फिर क्यों कर रहे हो ? ॥ ५० ॥

'याचकैः सर्वत्र स्वाभिलाषो न प्रकाशनीय' इत्येवं चातकान्योक्त्या बोधयति—

रे रे चातक ! सावधानमनसा मित्र ! क्षणं श्रूयता-
मम्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशाः।
केचिद् वृष्टिभिरार्द्रयन्ति वसुधां गर्जन्ति केचिद् वृथा
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥५१॥

अन्वयः—रे रे मित्र चातक! (त्वया) सावधानमनसा क्षणं श्रूयताम्, गगने बहवः अम्भोदाः वसन्ति, सर्वे अपि एतादृशाः न (सन्ति), केचिद् वसुधां वृष्टिभिः, आर्द्रयन्ति, केचिद् वृथा गर्जन्ति (त्वम्) यं यं पश्यसि तस्य तस्य पुरतः दीनं वचः मा ब्रूहि।

व्याख्या—रे रे चातकेति। रे रे मित्र चातक! = अयि सखे सारङ्ग-पक्षिन्! त्वया, सावधानमनसा = अवहितेन चेतसा, क्षणम् = अल्पकालं यावत्, श्रूयताम् = आकर्ण्यताम् मद्वचनमिति शेषः। किं तदित्याह-गगने = आकाशे, बहवः = बहुसङ्ख्याकाः अम्भोदाः = मेघाः, वसन्ति = निवासं कुर्वन्ति तिष्ठन्ति, सर्वेऽपि = सकला अपि ते, एतादृशाः = ईदृशाः करुणापरा इत्यर्थः, न = न वर्तन्ते, केचित् = केचन मेघाः, वसुधाम् = पृथिवीम्, वृष्टिभिः = वर्षणैः, आर्द्रयन्ति = क्लेदयन्ति, केचित् = अपरै मेघा, वृथा = निरर्थकम्, गर्जन्ति = महान्तं घोषं कुर्वन्ति, त्वम्, यं यम् = यं कञ्चिन्मेघम्, पश्यसि = अवलोकयसि, तस्य तस्य = सर्वस्य, पुरतः = अग्रे, दीनम् = दीनदशाप्रदर्शकम्, वचः = वचनम्, 'भाषितं वचनं वचः' इत्यमरः, मा ब्रूहि = न प्रकाशय। शार्दूलविक्रीडितं वृत्तम्।

भावार्थः—'गर्जन्तो न वर्षन्ति वर्षन्तो न गर्जन्ती'ति चातकैर्वृथा जलस्याशया यः कोऽपि मेघो व्यर्थं नाभ्यर्थनीयः, तथा याचकैर्धनस्याशया यः कोऽपि दाता न तावद् याचनीयः। यथोचित विचार्यैव कुत्रचित् स्वाभिप्रायः स्वैरं प्रकाशनीय इति।

भाषा—हे मित्र पपीहे! सावधान चित्त से क्षणभर (मेरी बात) सुनो! आकाश में बहुत-से बादल रहते हैं, पर सभी ऐसे ही (दयालु) नहीं होते! कुछ तो वर्षा से पृथ्वी को गीली बना देते हैं, और कुछ व्यर्थ ही गरजते रहते हैं। इसलिए जिसको-जिसको देखते ही उसके-उसके (सभी के) सामने दीन वचन मत बोलो ॥ ५१ ॥

दुर्जनानां नैसर्गिकं लक्षणमिदानीं निरूपयति—

अकरुणत्वमकारणविग्रहः परधने परयोषिति च स्पृहा।
सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥५२॥

अन्वयं—अकरुणत्वम्, अकारणविग्रहः, परधने परयोषिति च स्पृहा, सुजनबन्धुजनेषु असहिष्णुता-हि, इदं दुरात्मनां प्रकृतिसिद्धम् (अस्ति)।

व्याख्या—अकरुणत्वमिति । अकरुणत्वम् = निर्दयता, अकारणविग्र व्यर्थयुद्धम्, परधने = परकीये वित्ते, परयोषिति च = परस्त्रियां च, स्पृहा= प्रवृत्तिरभिलाषश्च, सुजनबन्धुजनेषु, सुजनाः = सज्जनाः, बन्धुजनाः = आत्मीय परिवारवर्गाश्च तेषु, असहिष्णुता = असहनशीलता ईर्ष्येति यावत्, हि = निश्चयेन इदम् = एतल्लक्षणम्, दुरात्मनाम् = दुष्टचित्तानां खलानाम्, प्रकृतिसिद्ध प्रकृत्या = स्वभावेन, सिद्धम् = निष्पन्नम् अस्ति । द्रुतविलम्बितं वृत्तम् ।

भावार्थः—स्वभावतः एव दुर्जना निष्ठुरा भवन्ति, व्यर्थमेव युद्धं कुर्व परधनं परस्त्रियश्च साभिलाषं पश्यन्ति, सज्जनानां बान्धवानाञ्चोत्कर्षं सहन्त इति ।

भाषा—निर्दयता, बिना कारण के लड़ाई करना, दूसरे से धन तथा ( को पाने ) की इच्छा करना तथा सज्जनों और बान्धवों के साथ असह शीलता का बर्ताव करना—ये लक्षण दुर्जनों में स्वभाव से ही पाये जाते हैं ।

'विदुषोऽपि दुर्जनस्य सङ्गतिः परिहरणीये'ति सोदाहरणं ब्रूते—

दुर्जनः परिहर्तव्यो विद्ययालंकृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥ ५३ ॥

अन्वय—दुर्जनः विद्यया अलङ्कृतः सन् अपि ( लोकैः ) परिहर्तव्यः मणिना भूषितः ( अपि ) असौ सर्पः भयङ्करः न किम् ।

व्याख्या—दुर्जन इति । दुर्जनः = दुष्टो जनः, विद्यया = शास्त्रज्ञानेन, अ ङ्कृतः = भूषितः, सन्नपि = भवन्नपि, लोकैः, परिहर्तव्यः = त्याज्य, तत्संसर्गो कर्तव्य इत्यर्थः । मणिना = शिरःस्थितेन रत्नेन, भूषितः = अलङ्कृतः, अ असौ = उक्तगुणः, सर्पः = भुजगः, भयङ्करः = भयप्रदः, न किम् = नास्ति किम अपितु अस्त्येवेत्यर्थः । अनुष्टुब् वृत्तम् ।

भावार्थः—आपाततो रमणीयगुणत्वेन दर्शनीयोऽपि दुर्जनो विद्यालोभ सर्पं इव मणिलोभात् केनापि कदापि नोपसर्पणीय द्वयोरप्यनयोरतिभयङ्कर सर्वथा हानिकरत्वादिति ।

भाषा—विद्या से भूषित होने पर भी खल त्याग करने योग्य है । म से अलङ्कृत होने पर भी क्या यह सर्प भयङ्कर नहीं होता ? ॥ ५३ ॥

गुणानापि दुर्जना दोषत्वेनैव सम्भवायन्ती'त्याह—

जाड्य ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं
शूरे निर्घृणता मुनौ विमतिता दैन्यं प्रियालापिनि ।
तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे
तत्को नाम गुणो भवेत् स गुणिनां यो दुर्जनैर्नाङ्कितः ॥ ५४ ॥

अन्वय —ह्रीमति जाड्यम्, व्रतरुचौ दम्भः, शुचौ कैतवम्, शूरे निर्घृणता मुनौ विमतिता, प्रियालापिनि दैन्यम्, तेजस्विनि अवलिप्तता, वक्तरि मुखरता, स्थिरे अशक्तिः गण्यते। तत् गुणिनां सः कः नाम गुणः भवेत् । यः दुर्जनैः न अङ्कितः ।

व्याख्या—जाड्यमिति । ह्रीमति=लज्जाशीले, गुरुजनादित्रपया किमपि साहसं कर्तुमसमर्थे, जाड्यम्=मन्दता अकिञ्चित्करत्वम्, व्रतरुचौ, व्रते=दुष्कर-चान्द्रायणादिव्रतानुष्ठाने रुचि=प्रवृत्तिर्यस्य तादृशे, दम्भः=आडम्बरः वञ्चकता, शुचौ=मनोवाक्कायादिभिः शुद्धे, कैतवम्=कपटः, 'कपटोऽस्त्री व्याजदम्भोपधय-श्छद्मकैतवे' इत्यमरः, शूरे=वीरे, शत्रुषु शौर्यं दर्शयतीति यावत्, निर्घृणता=निर्दयत्वम्; मुनौ=संसाराद्विरक्ते परमात्ममननशीले, विमतिता, विगता=नष्टा मतिः=बुद्धिर्यस्य तस्य भावस्तता बुद्धिहीनतेति यावत्, प्रियालापिनि=प्रिय-वचनशीले, दैन्यम्=दीनता, तेजस्विनि=परप्रयुक्ताऽपमानाद्यासहनशीले, अव-लिप्तता=अभिमानित्वम्, वक्तरि=भाषणशक्तिसम्पन्ने, मुखरता=दुर्मुखत्वं यथेच्छाऽनर्गलभाषितम्, 'दुर्मुखे मुखराबद्धमुखौ' इत्यमरः, स्थिरे=निश्चले कुत्रा-प्येकस्मिन्नेव विषये लग्ने, अशक्तिः=असमर्थता विषयान्तरज्ञानराहित्यमिति यावत्, 'मुखरता वक्तव्यशक्तिस्थिरे' इति पाठे--'वक्तव्यविषये या शक्ति=सामर्थ्यं तया तस्यां वा स्थिरे वक्तृत्वशक्तिशालिनीति यावत्, मुखरता=दुर्मुखत्वम्, इत्यर्थः करणीयः, गण्यते=मन्यते सम्भाव्यते, दुर्जनैरिति शेषः । तत्=तस्मात् कारणात्, गुणिनाम्=गुणवतां पुरुषाणाम्, सः; कः नाम=किन्नामधेयः, गुणः, भवेत्=स्यात्, यः गुणः, दुर्जनैः=दुष्टैः पुरुषैः, न अङ्कितः=न कलङ्कितः न दूषित इति यावत्, अपितु सर्व एव दूषितो भवतीत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ।

भावार्थः—लज्जाशीलत्वादिगुणविशिष्टेषु पुरुषेषु जाड्यादिकं दोषमारो-

पयतां दुष्टानां प्रकृतिरेवेयम्—यत् ते वस्तुतत्त्वमजानन्तो जानन्तो वापि वक्र मनिच्छन्तो गुणानपि दोषत्वेनैव गृह्णन्तीति ।

भाषा—( दुर्जनों द्वारा ) लज्जावान् पुरुष में जड़ता, व्रत में रुचि रख वाले पुरुष में पाखण्ड, पवित्र पुरुष में कपट, वीरपुरुष में निर्दयता, मुनि बुद्धिहीनता, मीठे वचन बोलने वाले में दीनता, विशेष प्रभावशाली व्यक्ति घमण्ड, वक्ता में मुखरता ( बकवादीपन ) तथा स्थिर ( गम्भीर ) पुरुष असमर्थता का होना समझा जाता है। तो गुणियों का कौन ऐसा गुण जिसमें दुर्जनों ने दोष न निकाला हो ॥ ५४ ॥

सम्प्रति लोभादीनां गुणाभावादिरूपत्वं प्रतिपादयति—

लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः
सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् ।
सौजन्य यदि किं गुणैः सुमहिमा यद्यस्ति किं मण्डनैः
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥ ५५

अन्वयः—लोभः चेत् ( अस्ति तर्हि ) अगुणेन किम्, यदि पिशुनता अ ( तर्हि ) पातकैः किम्, सत्य चेत् ( अस्ति तर्हि ) तपसा च किम्, यदि शु मनः अस्ति ( तर्हि ) तीर्थेन किम्, यदि सौजन्यं ( तर्हि ) गुणैः किम् य सुमहिमा अस्ति ( तर्हि ) मण्डनैः किम्, यदि सद्विद्या ( तर्हि ) धनैः किम्, य अपयशः अस्ति ( तर्हि ) मृत्युना किम् ?

व्याख्या—लोभश्चेदिति । लोभः = तृष्णा, चेत् = यदि, अस्ति त अगुणेन = गुणाभावेन दोषेणेति यावत्, किम् ? लोभस्यैव सकलदोषास्पदत्वा यदि चेत्, पिशुनता = दुर्जनता, 'पिशुनो दुर्जनः खल' इत्यमरः, अस्ति विद्यते, ( तर्हि ) पातकैः = पापैः, किम् ? दौर्जन्यस्यैव पापमूलकत्वात्, सत्यम् ऋतम्, 'सत्यं तथ्यमृतम्' इत्यमरः, चेत् = यदि, ( तर्हि ) तपसा च = चा यणादिना पुनः, किम् ? सत्यस्यैव तपोरूपत्वात्, यदि = चेत्, शुचि = निर्मलम्, मनः = चित्तम्, अस्ति = विद्यते, ( तर्हि ) तीर्थेन = काश्या तीर्थयात्रादिना किम् ? निर्मलेन मनसैव तीर्थयात्रादिजन्यफलनिष्पत्ते यदि = चेत्, सौजन्यम् = सज्जनता, अस्ति तर्हि, गुणैः = दयादाक्षिण्यादि



किम् ? सज्जनताया एव गुणविशेषरूपत्वात्, 'निजै'रिति पाठे—'निजैः

ात्मीयजनैः किम् ? सौजन्येनैव सर्वेष्वात्मीयत्वभावसंस्थापनात्' इत्यर्थः
रणीयः, यदि चेत्, सुमहिमा=सुन्दरं महत्त्वम्, अस्ति तर्हि, मण्डनैः=
लङ्कारैः किम् ? महत्त्वस्यैव स्वरूपसौन्दर्यसम्पादकत्वेन सकलालङ्कारभूत-
वात्, यदि=चेत्, सद्विद्या=श्रेष्ठा विद्या, तर्हि धनैः=द्रव्यैः, किम् ? विद्ययैव
नोपार्जनसम्भवात्, यदि, अपयशः=अकीर्तिः, वचनीयता निन्देति यावत्,
र्हि; मृत्युना=मरणेन, किम् ? वचनीयताया एव मरणाधिककष्टकारित्वा-
दित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

भावार्थः—लोभादिकस्य तत्तत्कार्यकारित्वेन गुणाभावादिरूपत्वमेवेति ।
त्र 'लोभः पैशुन्यमयशश्च गुणाभावपापमृत्युस्वरूपाणीति सर्वथा हेयानि, तथा
त्यता निर्मलमानसत्वं सज्जनता महत्त्वं परमं ज्ञानं च तपस्तीर्थगुणालङ्कार-
धनस्वरूपाणीति सर्वत्रोपादेयानि भवन्ती'ति गूढमुपदिष्टं ग्रन्थकृता ।

भाषा—यदि लोभ हो तो (और किसी) दुर्गुण का क्या प्रयोजन ? यदि चुगलखोरी हो तो (और किसी) पाप का क्या काम ? यदि सत्य हो तो तपस्या की क्या आवश्यकता ? यदि मन पवित्र हो तो तीर्थ (तीर्थाटन) से क्या लाभ ? यदि सज्जनता हो तो गुणों से क्या प्रयोजन ? यदि बड़ाई हो तो भूषणों की क्या आवश्यकता ? यदि अच्छी विद्या हो तो धन से क्या मतलब ? और अगर बदनामी हो तो मौत की क्या जरूरत ? ॥ ५५ ॥

'राजसभां प्राप्तो दुर्जनः स्वीयदौर्जन्येन सर्वेषां मनसि कष्टमेवोत्पादयती'
त्येवं प्रकृतं विवक्षुस्तेन सहाऽप्रकृतान् कांश्चिदन्यानपि मनःकष्टकरान्निर्दिशति—

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ५६ ॥

अन्वय—दिवसधूसरः शशी, गलितयौवना कामिनी, विगतवारिजं सरः, स्वाकृतेः अनक्षरं मुखम्, धनपरायणः प्रभुः, सततदुर्गतः सज्जनः, नृपाङ्गण-गतः खल—एतानि सप्त मे मनसि शल्यानि (वर्तन्ते)।

व्याख्या—शशीति । दिवसधूसरः, दिवसे=दिने धूसरः=मलिनः क्षीणका-
न्तिः, शशी=चन्द्रः, गलितयौवना, गलितम्=नष्टं यौवनम्=तारुण्यं यस्याः

सा, 'तारुण्य यौवनं समे' इत्यमरः, कामिनी = स्त्री, विगतवारिजम्, विग
तानि = दूरीभूतानि वारिजानि = कमलानि यस्मात्तत्, सरः = कासारः 'कासार
सरसी सरः' इत्यमरः, स्वाकृतेः, सुष्ठु = शोभना आकृतिः = अवयवसंस्थान
विशेषः स्वरूपमिति यावत्, यस्य तथाभूतस्य पुरुषस्य, अनक्षरम् = अक्षरशून्
विद्याविहीनमिति यावत्, मुखम् = वदनम्, धनपरायणः, धने = अर्थे परायण
= निरतः लुब्धः, प्रभुः = स्वामी राजा, सततदुर्गतः, सततम् = सदा दुर्गतः =
कष्टां दशां प्राप्तः, सज्जनः = सत्पुरुषः, नृपाङ्गणगतः, नृपस्य = राज्ञः अङ्गणम् =
अजिरम् भवनमध्यमिति यावत् गतः = प्राप्तः, 'अङ्गणं चत्वराजिरे' इत्यमरः
खलः = दुर्जनः, सप्त = सप्तसङ्ख्याकानि, मे = मम भर्तृहरेरिति यावत्, मनसि =
चित्ते, शल्यानि = शङ्कवः तीक्ष्णाग्रकण्टकस्वरूपाः कष्टकरा इति यावत् '
पुंसि शल्यं शङ्कुर्ना' इत्यमरः, वर्तते । पृथ्वीवृत्तम् ।

भावार्थः—दिने क्षीणकान्तिश्चन्द्रः संस्मरणीयशोभः सन् दुःखकरो भवति
नष्टतारुण्या प्रमदा करुणाया अक्षिपीडनस्य च विषयो भवति, विनष्टपद्मसौन्दर्य
सरोऽपि दुःखजनकमेव, मधुराकृतेः पुरुषस्य विद्याराहित्यमपि शोचनीय
नित्यं कष्टमनुभवन्तः सज्जनाः सचेतसां चेतसि करुणां शोकञ्चोत्पादयन्ति, ए
राजसभां प्रविष्टो दुर्जनोऽपि तैस्तैः कुत्सिताचरणैः सर्वेषामेव कष्टभूमिर्वर्तत इति

भाषा—दिन के समय धूमिल हो गया हुआ चन्द्रमा, यौवनहीन स्त्री
कमलहीन सरोवर, सुन्दर पुरुष का अक्षररहित ( विद्यारहित ) मुख, धन क
लोभी स्वामी ( राजा ), सदा दुर्दशा में पड़ा हुआ सज्जन तथा राजन के आँग
( दरबार ) में पहुँचा हुआ दुष्ट मनुष्य–ये सात मेरे मन मे काँटे की भाँति चुभ
( रहते ) है ॥ ५६ ॥

तीक्ष्णप्रकृते राज्ञः स्वरूपं वर्णयति —

न कश्चिच्चण्डकोपानामात्मीयो नाम भुभूजाम् ।
होतारमपि जुह्वानं स्पृष्टो दहति पावकः ॥ ५७ ॥

अन्वयः—चण्डकोपानां भूभुजां कश्चित् ( अपि ) आत्मीयो नाम
( अस्ति, हि ) पावकः स्पृष्टः ( सन् ) जुह्वान होतारम् अपि दहति ।

व्याख्या—न कश्चिदिति । चण्डकोपानाम् चण्डः = उग्रः भयङ्करः कोपः =

ोधो येषां तादृशानाम्, भूभुजाम् = महीपतीनां राज्ञाम्, कश्चिदपि = कोऽपि ुरुषः, आत्मीयो नाम = स्वीयत्वेन प्रसिद्धः, नामशब्दः प्रसिद्धौ, नास्ति = न विद्यते । अत्रोदाहरणमाह--पावकः = अग्निः, स्पृष्टः सन् = करस्पर्शविषयतां गतो भवन्, जुह्वानम् = हवनशीलं होमं कुर्वन्तम्, हुधातोः परस्मैपदित्वेन शानचः प्राप्तेरभावात् ताच्छील्यार्थे चानश्प्रत्ययस्य प्रयोगोऽयम्, होतारमपि = तन्नामधेयम् ऋत्विग्विशेषमपि, दहति = सन्तापयतीति यावत् । अनुष्टुब् वृत्तम् ।

भावार्थः—तीक्ष्णप्रकृतीनामत्युदण्डप्रयोगं कुर्वतां राज्ञां स्वानुरक्तेऽपि कुत्रापि स्वीयत्वबुद्धिर्न जायते, निजः परो वापि तन्मानसे समानमेव मूल्यं लभते। तथाहि होमेन प्रीणयतोऽपि होतुः करो वह्निना दह्यत एवेति ।

भाषा—अत्यन्त क्रोधी राजाओं का कोई अपना सगा नहीं है। छू जाने पर आग आहुति देनेवाले होता ( ऋत्विग् ) को भी जलाती है ॥ ५७ ॥

इदानीं सेवाया अतिदुष्करत्वं दर्शयतिः—

मौनान्मूकः प्रवचनपटुर्वातुलो जल्पको वा
धृष्टः पार्श्वे वसति च सदा दूरतश्चाऽप्रगल्भः ।
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः
सेवाधर्मः परमगहनो योगिनाप्यगम्यः ॥ ५८ ॥

अन्वयः—( पुरुषः ) मौनात् मूकः, प्रवचनपटुः वातुलः जल्पकः वा, ( यदि ) सदा पार्श्वे वसति ( तर्हि ) धृष्टः, ( यदि च ) दूरतः वसति तर्हि अप्रगल्भः, क्षान्त्या भीरुः, यदि न सहते (तर्हि) प्रायशः नाभिजातः (कथ्यते) । ( अतः ) परमगहनः सेवाधर्मः योगिनाम् अपि अगम्यः अस्ति ।

व्याख्या—मौनादिति । पुरुषः मौनात् = तूष्णीं भावाश्रयणात्, मूकः=वाचा विरहितः, 'अवाचि मूकः' इत्यमरः, प्रवचनपटुः, प्रवचने=समधिकभाषणे भाषणशक्ताविति यावत्, पटुः = निपुणः, वातुलः = वातरोगग्रस्तः उन्मत्तप्रलापी, जल्पको वा = वाचालो वा असङ्गतार्थप्रलापी, यदि सदा = नित्यम्, पार्श्वे = पार्श्वभागे समीपे, वसति = तिष्ठति, तर्हि धृष्टः = अविनीतः निर्लज्जः, 'धृष्टे धृष्णग् वियातश्च' इत्यमरः, यदि च, दूरतः=दूरे, वसति तर्हि, अप्रगल्भः=अप्रौढः प्रतिभाहीनः,'प्रगल्भः प्रतिभान्विते' इत्यमरः, क्षान्त्या=क्षमया कारणेन, भीरुः

भयान्वितः, यदि = चेत्, न सहते = मर्षयति, तर्हि प्रायशः = बहुधा, नाभि
जातः = अकुलीनः, नशब्देन सह 'सुप् सुपे'ति समासः, कथ्यत इति शेषः।
अतः परमगहनः=अतिगूढ़, सेवाधर्म = परिचर्यारूपं कर्म, योगिनामपि=
अतीन्द्रियार्थदर्शिनां त्रैकालिकज्ञानशालिनां महात्मनामपि, अगम्यः = अज्ञेय
अस्ति। अतिगूढं सेवाधर्मं योगिनोऽपि न जानन्ति किमुतान्य इत्यर्थः, मन्दा
क्रांतावृत्तम्।

भावार्थः—कस्यापि मनसस्तोषणं प्रायस्तदीयसेवयैव भवति, परं यथा
वत्सेवा न केनापि कथञ्चिदपि कर्तुं शक्या। किमपि गुणानां वर्णनमकुर्वाण
पुरुषो मूक इति, विशेषतो वर्णनं कुर्वन् उन्मत्तप्रलापीति असङ्गतार्थप्रलापीति
च वा, सर्वदा समीपे वसन् निर्लज्ज इति, दूरे वसन् अप्रौढ इति, सहनशील
भयान्वित इति, सहनशीलतारहितः क्रोधनश्चाकुलीनः अनार्य इति मन्यते; सेवा
धर्मस्यातिदुष्करत्वं स्पष्टमेवेति।

भाषा—( सेवक ) मौन रहने पर गूंगा, बातें करने में निपुण होने प
बावला अथवा बकवादी, पास रहने पर ढीठ, दूर रहने पर कच्ची बुद्धिवाला
क्षमाधारण करने पर डरपोक तथा बात न सहने पर भारी नीच कहा जात
है। सेवा का धर्म ( काम ) बड़ा कठिन होता है, इसे योगी भी नहीं समझ
पाते ॥ ५८ ॥

उद्भासिताऽखिलखलस्य विशृङ्खलस्य
प्राग्जातविस्तृतनिजाधमकर्मवृत्तेः।
दैवादवाप्तविभवस्य गुणद्विषोऽस्य
नीचस्य गोचरगतैः सुखमाप्यते कैः॥ ५९ ॥

अन्वयः—उद्भासिताऽखिलखलस्य विशृङ्खलस्य प्राग्जातविस्तृतनिजाधमक
र्मवृत्तेः दैवात् अवाप्तविभवस्य गुणद्विषः अस्य नीचस्य गोचरगतैः कैः सुखं
आप्यते ?

व्याख्या—उद्भासितेति। उद्भासिताऽखिलस्य, उद्भासिताः = प्रकाशिता
दुष्कर्मकारित्वेन लोके प्रसिद्धिं नीता इति यावत्, अखिलाः = सर्वे खलाः =
दुर्जनाः येन तादृशस्य, 'पिशुनो दुर्जनः खलः' इत्यमरः, विशृङ्खलस्य=स्वतन्त्र

ऐति यावत्, प्राग्जातविस्तृतनिजाधमकर्मवृत्तेः प्राग्जातानि = पूर्वस्मिन् समये नष्पन्नानि विस्तृतानि = समयेऽस्मिन् सर्वतः प्रसारितानि निजानि = स्वीयानि अधमकर्माणि = दुराचरणानि तेषु वृत्तिः = प्रवृत्तिर्यस्य तथाभूतस्य, दैवात् = सौभाग्यवशात् 'दैवं दिष्टं भागधेयम्' इत्यमरः, अवाप्तविभवस्य, अवाप्तः = प्राप्तः विभवः=ऐश्वर्यं येन तस्य, गुणद्विषः, गुणान् = दयादाक्षिण्यादीन् सद्गुणान् द्वेष्टि= द्रुह्यतीति गुणद्विट् तस्य, क्विप् प्रत्ययः, अस्य=एतस्योक्तगुणविशिष्टस्य, नीचस्य अधमस्य दुराचारिणः, गोचरगतैः, गोचरम् = विषयं दृशोः पुर इति यावत् गताः=प्राप्ताः तथाभूतैः, कैः=कैः पुरुषैः, सुखम्=कल्याणम्, शर्मशातसुखानि च, श्वः श्रेयसं शिवं भद्रं कल्याणम्' इत्यमरः, आप्यते=लभ्यते ? न कैरपीत्यर्थः । वसन्ततिलकावृत्तम् ।

भावार्थः = दुर्जनशिरोमणिः स्वतन्त्रश्च नीचः पुरुषः स्वभावतः एव भीषणो भवति । तत्रापि यदि तेन कुतोऽपि कापि सम्पत्तिर्लब्धा तर्हि तदीयं दौर्जन्यं नूनम् वर्णनीयमेव । सद्गुणैः सह शत्रुतां वहन् दर्शनमात्रेणैव क्लेश-करोऽयं सर्वेषामिति ।

भाषा—सारे दुष्टों को प्रकाशित करनेवाले ( उन्नतिशील बनानेवाले ), स्वेच्छाचारी, अपने पहले किये हुए नीच कर्म को ( क्रमसे ) विस्तृत रूप में करने की प्रवृत्तिवाले अकस्मात् धन पा जाने वाले तथा सद्गुणों से वैर रखने वाले नीच पुरुष की दृष्टि में पड़े हुए कौन-से लोग सुख पाते हैं ? ॥५९॥

इदानीं सज्जनानां दुर्जनानां प्रत्येकं मित्रतायाः स्वरूपं वर्णयति—

आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा बुद्धिमती च पश्चात् ।
दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥ ६० ॥

अन्वयः—खलसज्जनानां मैत्री आरम्भगुर्वी क्रमेण क्षयिणी, पुरा लघ्वी पश्चात् च बुद्धिमती (अतः) पूर्वार्धपरार्धभिन्ना दिवस्य छाया इव (भवति) ।

व्याख्या—आरम्भेति । खलसज्जनानाम्, खलाः = दुष्टपुरुषाः, सज्जनाः = श्रेष्ठपुरुषाश्चेति ते तेषाम्, मैत्री = मित्रता स्नेह इति यावत्, आरम्भगुर्वी आरम्भे = आदौ गुर्वी = महती वर्धमाना, क्रमेण = कालक्रमानुसारम्, क्षयिणी = क्षीयमाणा, पुरा = प्रथमम्, लघ्वी = स्वल्परूपा, पश्चात् = अनन्तरं च, बुद्धिमती वृद्धिं गच्छन्ती, अतो हेतोः पूर्वार्धपरार्धभिन्ना, पूर्वार्धे = प्रथमार्धे प्रातःकालाद्

द्वादशवादनपर्यन्तमिति यावत्, परार्धे च = उत्तरार्धे च द्वादशवादनानन्त सायङ्कालपर्यन्तमिति यावत्, भिन्ना = पृथक्पृथग्रूपा, दिनश्च = दिवस छाया = अनातपः 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः, इवः यथा भवति । उपजातिर्वृत्तम् ।

भावार्थः—यथा दिनश्च पूर्वार्धभागे छाया पूर्वंक्रमेण वर्धमाना बृहद्रू ततः क्षीणा स्वल्परूपा उत्तरार्धभागे च पूर्वं क्षीणा स्वल्परूपा ततो वर्धमान बृहद्रूपा भवति, तथैव दुर्जनानां स्नेहः पूर्वं बृहद्रूपतां ततः स्वल्परूपतां सजना नाञ्च पुनः पूर्वं स्वल्परूपतां ततो बृहद्रूपतां प्राप्तो दृश्यते । दुर्जनाः स्वका साधयितु पूर्वं कृत्रिम स्नेहं दर्शयन्ति कार्ये सिद्धे च स्नेहात् पृथग्भूता भवन्ति सज्जनाः पुनः पूर्वं परिचयाभावे साधारणरूपेण ततः परिचयविशेषाद्विशेषरूपे स्नेहं स्वभावादेव दर्शयतीति तयोः परस्परं भेदः । अतो दिवसपूर्वार्धच्छायासदृ दुर्जनानां सज्जनानाञ्च दिवसोत्तरार्धच्छायासदृशी प्रीतिर्भवतीति ।

भाषा—दिन के पहले और पिछले आधे भाग में भिन्न-भिन्न रूप से रह वाली छाया के समान दुष्टों और सज्जनों की मित्रता क्रम से आरम्भ में बड़ी फिर धीरे-धीरे कम होने वाली तथा पहले छोटी फिर बाद में बढ़नेवाल होती है ॥ ६० ॥

'कारणं विनैव दुर्जनाः शत्रुतां भजन्ती'ति सोदाहरणं निरूपयति—

मृगमीनसज्जनानां तृणजलसन्तोषविहितवृत्तीनाम् ।
लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥ ६१ ॥

अन्वयः—जगति लुब्धकधीवरपिशुनाः तृणजलसन्तोषविहितवृत्तीनां मृगमीन सज्जनानां निष्कारणवैरिणः ( सन्ति ) ।

व्याख्या—मृगमीनेति । जगति = लोके, लुब्धकधीवरपिशुना, लुब्धकाः = व्याधाः पशुमारणकर्मणा जीवननिर्वाहं कुर्वन्ति इति यावत्, 'व्याधो मृगवधा जीवो मृगयुर्लुब्धकोऽपि सः' इत्यमरः, धीवराः = कैवर्ता मत्स्याजीवाः पिशुनाः = दुर्जनाश्चेति ते, तृणजलसन्तोषविहितवृत्तीनाम्, तृणम् = घासः जलम् = सलिलं सन्तोषः = तृप्तिः लोभाभावश्च, वृत्तिः = जीवनं येषां तादृशानाम्, 'वृत्तिर्वर्तन जीवने' इत्यमरः, मृगमीनसज्जनानाम्, मृगाः = पशवः, मीनाः = मत्स्याः, 'झषो

त्स्यो मीन' इत्यमरः, सज्जनाः = सत्पुरुषाश्च तेषाम् निष्कारणवैरिणः, ष्कारणम् = व्यर्थमेव वैरिणः = शत्रव इति ते, भवन्ति ।

भावार्थः—तृणभक्षणेन स्वच्छन्दं जीवनं निर्वाहतां वन्यपशूनां व्याधाः; जलेन जीवतां मत्स्यानां कैवर्ताः, सन्तुष्टचेतसामलुब्धानां सज्जनानाञ्च दुर्जनाः, संसारे व्यर्थमेव शत्रवो भवन्तीति व्याधादीनां स्वाभाविक एवायं दोष इति ।

भाषा—संसार में घास, पानी तथा सन्तोष से जीविका चलाने वाले पशु, मछली और सज्जन के (क्रम से) बहेलिया, मल्लाह तथा दुर्जन, ये बिना कारण के शत्रु हैं ॥ ६१ ॥

सम्प्रतिसार प्रमाणपुरःसरं सद्गुणभूषणान् सज्जनान् वर्णयन्नाह—

वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् ।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले
येष्वेते निवसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ ६२ ॥

अन्वयः—सज्जनसङ्गमे वाञ्छा, परगुणे प्रीतिः, गुरौ नम्रता, विद्यायां व्यसनम्, स्वयोषिति रतिः, लोकापवादात् भयम्, शूलिनि भक्तिः, आत्मदमने शक्तिः, खले संसर्गमुक्तिः, एते निर्मलगुणाः येषु वसन्ति तेभ्यः नरेभ्यः नमः (अस्तु)।

व्याख्या—वाञ्छेति । सज्जनसङ्गमे, सज्जनानाम् = सत्पुरुषाणां सङ्गमः = समागमः सहवास इति यावत् तस्मिन्, वाञ्छा = इच्छा प्रवृत्तिः, परगुणे, परेषाम् = अन्येषां पुरुषाणां गुणे = दयादाक्षिण्यादौ, प्रीतिः = प्रसन्नता, गुरौ = पूज्ये पित्रादौ, नम्रता = विनयः, विद्यायाम् = ज्ञानार्जने, व्यसनम् = आसक्तिः, स्वयोषिति = पाणिना गृहीतायां पत्न्याम्, रतिः = अनुरागः प्रेम, लोकापवादात् = लोकनिन्दायाः, भयम् = भीतिः, शूलिनि = त्रिशूलधारिणि महेश्वरे, शिवे, 'शिवः शूली महेश्वरः' इत्यमरः, भक्तिः = पराऽनुरक्तिः, आत्मदमने, आत्मनः = चित्तस्य 'आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च' इति धरणिकोषः, दमनम् = निग्रहः एकत्र लक्ष्ये व्यवस्थापनं तस्मिन्, शक्तिः = सामर्थ्यम्, खले = दुर्जनविषये, संसर्गमुक्तिः =

सम्बन्धस्य त्यागः, एते = अमी अनुपदमेवोक्ताः, निर्मलगुणाः, निर्मलाः = शुद्धा ते गुणाः = सज्जनसमागमेच्छादयो गुणाश्चेति ते, येषु = येषु नरेषु, वसन्ति = स्थिति लभन्ते, तेभ्यः = तादृशगुणविशिष्टेभ्यः, नरेभ्यः = सत्पुरुषेभ्यो महद्भ्यः नमः = नमस्कारोऽस्तु । शार्दूलविक्रीडितं वृत्तम् ।

भावार्थः—सज्जनसमागमेच्छादिभिर्बहुमूल्यैः सुन्दरैर्गुणैरलङ्कृताः सज्जनाः सर्वेषां प्रणामयोग्या आदरणीयाः सन्ति च तेषां चरितमनुकरणीयं सर्वैरिति ।

भाषा—भले लोगों के साथ की इच्छा, दूसरों के गुण में अनुराग, गुरु प्रति नम्रता, विद्या का व्यसन, अपनी स्त्री में प्रेम, लोकनिन्दा का ड शङ्करजी में भक्ति, मन को दबाने ( वश में करने ) की शक्ति तथा दुष्टों संसर्ग का त्याग--ये निर्मल ( उत्तम ) गुण जिन पुरुषों में रहते हैं उन नमस्कार है ।। ६२ ।।

सज्जनानां नैसर्गिकं लक्षणमिदानीं निरूपयति—

विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ६३

अन्वयः—विपदि धैर्यम्, अथ अभ्युदये क्षमा, सदसि वाक्पटुता, युधि विक्रमः यशसि अभिरुचिः, श्रुतौ च व्यसनम्—हि, इदं महात्मनां प्रकृतिसिद्ध (अस्ति) ।

व्याख्या - विपदीति । विपदि = विपत्तिकाले, धैर्यम् = धृतिः चित्तस्य निर्विकारता, अथ = अपि च, अथशब्दश्चकारार्थे, अभ्युदये = सर्वतः उन्नत्यां सत्याम् सम्पत्ताविति यावत्, क्षमा = सहनशीलता, सदसि = सभायाम् 'सभासमितिसंसदः, आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सद' इत्यमरः वाक्पटुता = वाग्मित्वम्, 'वाचो युक्तिपटुर्वाग्मी' इत्यमरः, युधि = आजौ युद्धे इति यावत्, 'समित्याजिसमिद्युध' इत्यमरः, विक्रमः = शौर्यम्, यशसि = कीर्तौ प्रशंसनीये कर्मणि, अभिरुचिः = विशिष्टं प्रेम, श्रुतौ च = वेदे च, 'श्रुतिः स्त्री वेद आम्नायः' इत्यमरः, व्यसनम् = आसङ्गः स्थिरा प्रवृत्तिः, हि = निश्चयेन इदम् = एतत्पूर्वोक्तं विपत्तिसमयोचितधैर्यधारणादिकम्, महात्मनाम्, महान् = उदारः आत्मा = चित्तं येषां तादृशानां सज्जनानाम्, प्रकृतिसिद्धम्, प्रकृत्या = स्वभावेन सिद्धम्, अस्ति । द्रुतविलम्बितं वृत्तम् ।

भावार्थः—जगति सज्जनाः स्वभावेनैव कष्टमये समये निर्विकारचित्ता उन्नतिविशेषे सति सर्वशून्याः पराऽपराधसहनशीला विद्वत्समाजे पुनः सुन्दर-वाक्शक्तिसम्पन्ना युद्धे शूरा यशःप्रिया वेदाभ्यासपरायणाश्च सन्तोऽन्यानपि तथैव चेष्टितुं शोभनमुपदिशन्तीति ।

भाषा—विपत्ति में धैर्य, बढ़ती में क्षमा, सभा में वचनचातुर्य, युद्ध में पराक्रम ( वीरता ), कीर्ति ( के प्राप्त करने ) में विशेष रुचि तथा वेदाध्ययन में आसक्ति—ये सब बातें महापुरुषों में स्वभाव से ही होती हैं ॥६३॥

प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रमविधिः
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः ।
अनुत्सेको लक्ष्म्यामनभिभवगन्धा परकथाः
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ६४ ॥

अन्वयः—प्रदानं प्रच्छन्नम्, गृहम् उपगते सम्भ्रमविधिः, प्रियं कृत्वा मौनम्, च सदसि उपकृतेः कथनम्, लक्ष्म्याम् अनुत्सेकः, परकथाः अनभिभव-गन्धाः, इदं विषमम् असिधाराव्रत सतां केन उद्दिष्टम् ?

व्याख्या—प्रदानमिति । प्रदानम् = सत्पात्रेभ्यो दानम्, प्रच्छन्नम् = अप्रकाशम् गूढरूपेणेति यावत्, गृहम् = गेहम्, 'गृहं गेहोदवसितम्' इत्यमरः, उपगते = प्राप्ते अतिथाविति यावत्, 'अतिथिर्ना गृहागते' इत्यमरः, सम्भ्रमस्य आदरस्य 'सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि' इति मेदिनी, विधिः = प्रदर्शन-मिति यावत्, प्रियम् = हितम् अन्येषामभीष्टमित्यर्थः, कृत्वा = विधाय, मौनम् = मूकभावः तस्याऽप्रकाशनमिति यावत् । अपि च = अन्यच्च सदसि = सभायां सर्वजनप्रत्यक्षमिति यावत्, उपकृतेः = उपकारस्य अन्येन विहितस्य, कथनम् = वर्णनं प्रकाशनम्, लक्ष्म्याम् = सम्पत्तौ सत्याम्, अनुत्सेकः, न उत्सेकः अनुत्सेकः = सर्वराहित्यम्, परकथाः परेषाम् = अन्येषाम् कथाः = चरितकथनानि, अनभिभवगन्धा , नास्ति अभिभवस्य = आक्षेपस्य निन्दाया इति यावत्, गन्धः = लेशः 'गन्धो गन्धक आमोदे लेशे' इति विश्वः, यासु तास्तथाभूताः इदम् = अनुपदमेवोक्तं, सर्वम्, विषमम् = दुष्करम्, असिधाराव्रतम् = खड्ग-

=धारेव तीक्ष्णतरो नियमः, सताम् =सत्पुरुषाणाम्, केन =केन पुरुषेण उद्दि
=उपदिष्टम् ? न केनापीत्यर्थः। शिखिरिणी वृत्तम्।

भावार्थः—सज्जनानां स्वभावसिद्धोऽयं गुणः, यत् ते दत्वा न कीर्तयन्ति
गृहागतान् सत् कुर्वन्ति, स्वकृतं परस्योपकारं क्वचिदपि न प्रकाशयन्ति परः
स्वस्योपकारं सर्वतः प्रकाशयन्ति सम्पत्तौ गर्वाभिभूता न भवन्ति परेषां सच्चरि
तानि च सादरं वर्णयन्तीति।

भाषा—गुप्त दान देना, घर पर आये हुए (अतिथि) के साथ आदर
बर्ताव करना, भलाई करके चुप रहना, (अपने ऊपर दूसरों के किये हुए
उपकार को सभा में कहना, सम्पत्ति होने पर गर्व न करना, दूसरों की च
के प्रसङ्ग में किसी की निन्दा न करना, इस प्रकार के कठोर असिधाराव्रत
उपदेश सज्जनों को किसने दिया है॥ ६४॥

करादिषु दानाद्यलङ्काराणां सत्त्वेन किमन्यैरलङ्कारैः कार्यमि'ति दर्शयन्नाह—

करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता
मुखे सत्या वाणी विजयि भुजयोर्वीर्यमतुलम्।
हृदि स्वच्छा वृत्तिः श्रुतमधिगतं च श्रवणयो-
र्विनाऽप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम्॥ ६५॥

अन्वयः—करे श्लाघ्यः त्यागः, शिरसि गुरुपादप्रणयिता, मुखे सत्या वाणी
भुजयोः विजयि अतुलं वीर्यम्, हृदि स्वच्छा वृत्तिः, श्रवणयोः च अधिगतं श्रुतम्
इदम् ऐश्वर्येण विना अपि प्रकृतिमहताम् मण्डनम् (अस्ति)।

व्याख्या—कर इति। करे =हस्ते, 'बलिहस्तांशवः कराः' इत्यमरः, श्लाघ्य
प्रशंसनीयः, त्याग =दानम् 'त्यागो विहापितं दानम्' इत्यमरः, शिरसि=
मस्तके गुरुपादप्रणयिता, गुरोः =पित्रादेः पूजनीयजनस्य पादयोः =चरणयो
प्रणयिता =स्नेहः पादप्रणामरूपो विनय इति यावत्, मुखे =आनने, सत्या=
तथ्या, 'सत्यं तथ्यामृतम्' इत्यमरः, वाणी =सरस्वती, गीर्वाग् वाणी सरस्वती
इत्यमरः, भुजयोः =बाह्वोः, 'भुजबाहू प्रवेष्टो दोः' इत्यमरः, विजयि =जय
शीलम्, सफलमिति यावत्, अतुलम्, नास्ति तुला =साम्यं यस्य तत् अद्भुतम्
वीर्यम् =शौर्यम्, हृदि =हृदये, स्वच्छा =निर्मला, वृत्तिः =व्यापारः, भा

यावत् । श्रवणयोश्च=कर्णयोश्च, 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः, अधिगतम्=ज्ञातम् श्रुतम्=शास्त्रम्, इदम्=एतत् पूर्वोक्तम्, ऐश्वर्येण=विभूत्या सम्पत्त्येति यावत्, 'विभूतिर्भूतिरैश्वर्यम्' इत्यमरः, विनापि=विनैव, अपिशब्द एवार्थे, प्रकृतिमहताम्, प्रकृत्या=स्वभावेन महान्तः=उन्नताः तेषां सत्पुरुषाणामिति यावत्, मण्डनम्=भूषणम्, अस्ति । शिखरिणी वृत्तम् ।

भावार्थः—लोके हि कङ्कणेन करो, मुकुटेन शिरः, ताम्बूलेन मुखं, केयूरेण भुजो, हारेण हृदयं, कुण्डलेन च श्रवणं सर्वेषां शोभाविशेषं प्राप्नुवन्ति, किन्तु निसर्गतो महत्त्वं गतानां पुरुषाणां करे दानं, शिरसि नम्रत्वं मुखे वाङ्माधुर्यं, भुजे वीर्यं, हृदये निर्मलत्वं, श्रवणे च शास्त्रज्ञानमेव भूषणस्वरूपं भवतीति तेषां सम्पत्तिमन्तरेणापि भूषणमिदं सर्वतो विशिष्टं वरीवर्तीति ।

भाषा—हाथ में प्रशंसनीय दान, सिर पर गुरु के चरणों में किया गया प्रणाम, मुख में सत्य वचन,भुजाओं में विजयकारक अतुलित बल, हृदय में निर्मल भाव तथा कानों में शास्त्र का ज्ञान—( ये सब ) स्वभाव से बड़े पुरुषों के लिए धन आदि के (व्यय के) विना ही प्राप्त गहने हैं ।। ६५ ।।

'सुखेषु दुःखेषु च सज्जनानां चेतोवृत्तिः कीदृशी भवती'ति दर्शयति—

सम्पत्सु महतां चित्तं भवत्युत्पलकोमलम् ।
आपत्सु च महाशैलशिलासङ्घातकर्कशम् ।। ६६ ।।

अन्वयः—महतां चित्तं सम्पत्सु उत्पलकोमलम्, आपत्सु च महाशैलशिलासङ्घातकर्कशं ( भवति ) ।

व्याख्या—सम्पत्स्विति । महताम्=महात्मनाम्, चित्तम्=चेतः, सम्पत्सु=विभवेषु सुखेषु सत्सु उत्पलकोमलम्, उत्पलमिव=कुवलयमिव 'स्यादुत्पलं कुवलयम्' इत्यमरः, कोमलम्=मृदु, 'कोमलं मृदुलं मृदु' इत्यमरः, आपत्सु च=विपत्सु च कष्टेषु सत्सु महाशैलशिलासङ्घातकर्कशम्, महान्=विशालः यः शैलः=पर्वतः तस्य शिलाः=प्रस्तराः 'प्रस्तरग्रावोपलाश्मानः शिला' इत्यमरः, तासां सङ्घातः=समूहः 'निवहव्यूह···वारसङ्घातसञ्चयाः' इत्यमरः, स इव कर्कशम्='कर्कशं कठिनं क्रूरम्' इत्यमरः, भवति । अनुष्टुप् वृत्तम् ।

भावार्थः—सम्पत्तौ सत्यां सज्जनाः कमल इव कोमले मनसि दयां वहन्तो

विपदं जनानां दूरीकर्तुं प्रयतन्ते, विपत्तौ च पुनः प्रस्तर इव कठिने म
धैर्यं वहन्तः सकलमापतितं दुःख सहन्त इति ।

भाषा—महापुरुषों का चित्त सम्पत्ति के समय कमल की भाँति को
होता है, वही विपत्ति के समय बड़े पर्वत की चट्टानों के समूह की भाँति
हो जाता है ।। ६६ ।।

'वस्तुनि स्वातन्त्र्येण गुणविशेषः कोऽपि न विद्यते, संसर्गबलादेव तत्रोत्त
दिगुणवत्त्व भवती' त्युदाहरणमुखेन प्रतिपादयति--

सन्तप्ताऽयसि संस्थितस्य पयसो नामाऽपि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वात्यां सागरशुक्तिमध्यपतितं तन्मौक्तिकं जायते
प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ।। ६७ ।।

अन्वयः—सन्तप्ताऽयसि संस्थितस्य पयसः नाम अपि न ज्ञायते, तत्
नलिनीपत्रस्थितं ( सत् ) मुक्ताकारतया राजते, तत् स्वात्यां सागरशुक्तिम
पतितं ( सत् ) मौक्तिकं जायते । ( हि ) प्रायेण अधममध्यमोत्तमगुणः संसर्ग
जायते ।

व्याख्या—सन्तप्ताऽयसीति । सन्तप्ताऽयसि; सन्तप्तम्=अग्नौ प्रक्षेपाज
लितम् अयः=लोहः तस्मिन्, 'लोहोऽस्त्री शस्त्रक तीक्ष्णं पिण्डं काला
साऽयसी' इत्यमरः; संस्थितस्य=वर्तमानस्य, पयसः=जलस्य, 'सलिलं क
जलम्, पयःकीलालममृतम्' इत्यमरः, नामापि=नामधेयमपि, न ज्ञायते=
नावगम्यते, तदेव=तज्जलमेव, नलिनीपत्रस्थितम्, नलिन्याः=कमलिन्याः कम
लताया इति यावत्, यत् पत्रम्=पर्णं कमलमिति यावत्, तस्मिन् स्थितम्=
लब्धस्थितिकं सत्, मुक्ताकारतया, मुक्तायाः=मौक्तिकस्य आकारः=स्वरूप
आकारः=स्वरूपम् अस्यास्तीति मुक्ताकारं तस्य भावस्तत्ता तया मौक्तिकस्
रूपेणेत्यर्थः, राजते=शोभते, तत्=पुनस्तज्जलम्, स्वात्याम्=स्वातीनक्षत्रे
सति, सागरशुक्तिमध्यपतितम्, सागरे=समुद्रे या शुक्तिः=मुक्तास्फोटः,
मुक्ताः ( मौक्तिकानि ) स्फुटन्ति ( विकसन्ति ) तद्वस्तु मुक्तास्फोट उच्यते त
मध्ये=अन्तराले पतितम्=गतं सत् मौक्तिकम्=मुक्तारत्नम्, जायते=भवति

हि = युक्तमेव, प्रायेण = बाहुल्येन, अधममध्यमोत्तमगुणः = अधमो मध्यम उत्तमश्च गुणः,, प्रत्येकाभिप्रायेणैकवचनम्, संसर्गतः = तत्तत्सम्बन्धवशात्, जायते = उद्भवति। आधारगता गुणा आधेये स्वसमानमेव गुणमुत्पादयन्तीत्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

भावार्थः—जले स्वरूपेण किमप्युत्तमादिगुणवत्त्वं नास्ति, किन्तु तत्तदाधारभेदेन तत्र तादृग्गुणवत्त्वं स्पष्टमुपलभ्यते। तथाहि-'तप्ते लोहे जलं पतितं नाममात्रेणाऽप्यदृश्यमानं तत्सर्वथा स्वरूपेणैव नष्टं भवतीत्यधमगुणवत्त्वं तत्र, कमले बिन्दुरूपेण स्थितं तन्मौक्तिकसादृश्येन दृष्टिपथं प्रयातीति मध्यमगुणवत्त्वम्, समुद्रे च शुक्तौ स्वातीनक्षत्रयोगे पतितं साक्षान्मौक्तिकमेव सञ्जायत इत्युत्तमगुणवत्त्वम्। अतः सिद्धं 'स्थानविशेषेण वस्तुनः कस्याप्युत्कर्षापकर्षौ भवत' इति।

भाषा—गर्म लोहे पर पड़े हुए जल का नाम भी नहीं जाना जाता ( रह जाता ), वही पुरइन के पत्ते पर मोती का आकार धारण करने पर भला मालूम पड़ता है, फिर स्वाती नक्षत्र में समुद्र की सीपी में पड़कर मोती बन जाता है। निकृष्ट, मध्यम तथा उत्तम गुण प्रायः संसर्ग से ही उत्पन्न होता है॥ ६७॥

'सत्पुत्रादिप्राप्तिः पुण्येनैव भवती'त्याह—

**प्रीणाति यः सुचरितैः पितरं स पुत्रो यद्भर्तुरेव हितमिच्छति तत्कलत्रम्।**
**तन्मित्रमापदि सुखे च समक्रियं यदेतत्त्रयं जगति पुण्यकृतो लभन्ते॥**

अन्वयः—यः सुचिरितैः पितरं प्रीणाति सः (एव) पुत्रः, यत् भर्तुः हितम् इच्छति तत् एव कलत्रम्, यत् आपदि सुखे च समक्रियं तत् ( एव ) मित्रम्। एतत्त्रयं जगति पुण्यकृतः लभन्ते।

व्याख्या—प्रीणातीति। यः सुचरितैः = आज्ञापालनादिरूपैः सदाचारैः, पितरम् = जनकम्, 'तातस्तु जनकः पिता' इत्यमरः, प्रीणाति = सन्तोषयति, स एव = सद्गुणविशिष्ट एव, पुत्रः = सुतः, कथ्यते, यत् भर्तुः = पत्युः, हितम् = कल्याणम्, इच्छति = वाञ्छति, तदेव = तादृग्गुणविशिष्टमेव, कलत्रम् = भार्या कथ्यते, 'कलत्रं श्रोणिभार्ययोः' इत्यमरः, यत् आपदि = दुःखे, सुखे च = सम्पत्तौ च, समक्रियम्, समा = तुल्या एकरूपेति यावत्, क्रिया = कार्यविशेषो

यस्य तत्, तदेव = तादृग्गुणविशिष्टमेव, मित्रम् = सुहृत्, कथ्यते। एतत्त्रयम्= पूर्वोक्तशालिपुत्रादीनां त्रितयम्, जगति = लोके, पुण्यकृतः, पुण्यम् = सुकृतं कृ वन्त इति पुण्यकृतः ते, 'सुकर्मपापमन्त्रपुण्येषु कृञः' इति भूतार्थे क्विप्प्रत्यय लभन्ते = प्राप्नुवन्ति। वसन्ततिलका वृत्तम्।

भावार्थः—पित्रनुकूलाचरणः पुत्रः पतिहितपरा भार्या समदुःखसुखं मि श्चेति पुण्येनैव सुप्रापम्, कुपुत्रादिप्राप्तिः पुनः पापकर्मणां फलमिति।

भाषा—जो अपने अच्छे कर्मों से पिता को प्रसन्न करता है वही पुत्र जो पति का कल्याण चाहती है वही स्त्री है, जो विपत्ति और सुख दोनों एक-सा काम (व्यवहार) करता है वही मित्र है। संसार में इन तीनों पुण्य करने वाले ही पाते हैं॥ ६८॥

'इच्छानुसारं द्वयोः किमप्येकमेवाश्रयणीयं जनै'रित्याह—

एको देवः केशवो वा शिवो वा ह्येकं मित्रं भूपतिर्वा यतिर्वा।
एको वासः पत्तने वा वने वा ह्येका भार्या सुंदरी वा दरी वा॥

अन्वयः—केशवः वा शिवः वा एकः देवः (आश्रयणीयः), भूपतिः य वा एकं मित्रं (कर्तव्यम्), पत्तने वा वने वा एकः वासः (कर्तव्यः), सुन्द वा दरी वा एका भार्या (कर्तव्या)।

व्याख्या—एको देव इति। केशवो वा = विष्णुर्वा, शिवो वा = शङ्क वा, एकः = द्वयोर्मध्ये यः कोऽप्यन्तरः, देवः = परमेश्वरः आश्रयणीयः, नृपतिर्वा= राजा वा यतिर्वा = विरक्तः संन्यासी योगी वा, एकम् = उभयोर्यत्किञ्चि मित्रम् = सुहृत्, कर्तव्यम्, पत्तने वा = नगरे वा, वने वा = अरण्ये वा, एकः= एक-द्वयोर्मध्ये यः कोऽपीत्यर्थः, वासः = स्थितिः कर्तव्यः, सुन्दरी वा = सौन्द पूर्णा काचित् कान्ता वा, दरी वा = पर्वतस्य कन्दरा वा, 'दरी तु कन्दरो वा' इत्यमरः' एका = उभयत्र काचित्, भार्या = पत्नी, कर्तव्या।

भावार्थः—केशवशिवादिषु मनुष्येण यथेच्छं किञ्चिदेकमेवावलम्बनी जगति। उभयत्र स्नेहं वहन् किञ्चिदपि यथावत्साधयितुमशक्नुवन् मनुष्यः इ भ्रष्टस्ततोऽपि भ्रष्टो भवतीति।

भाषा—(मनुष्य का) एक ही (इष्ट) देव (होना चाहिए), वह विष्ण हों अथवा शंकर हों, एक ही मित्र (होना चाहिए), वह राजा हो अथ योगी हो, एक ही निवास-स्थान (होना चाहिए), वह नगर में हो अथ

जंगल में हो और एक ही पत्नी (होनी चाहिए), वह सुन्दरी स्त्री हो या गुफा हो ॥ ६९ ॥

नम्रतादिगुणैः सज्जनाः सर्वतः पूजनीया भवन्ती'त्याह—

नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान् गुणान् ख्यापयन्तः
स्वार्थान् सम्पादयन्तो विततपृथुतरारम्भयत्नाः परार्थे।
क्षान्त्यैवाऽऽक्षेपरूक्षाक्षरमुखरमुखान् दुर्जनान् दूषयन्तः
सन्तः साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्च्चनीयाः ॥

अन्वयः—नम्रत्वेन उन्नमन्तः, परगुणकथनैः स्वान् गुणान् ख्यापयन्तः, परार्थे विततपृथुतरारम्भयत्नाः (सन्तः) स्वार्थान् सम्पादयन्तः, आक्षेपरूक्षाक्षरमुखरमुखान् दुर्जनान् क्षान्त्या एव दूषयन्तः; साश्चर्यचर्याः बहुमताः सन्तः जगति कस्य न अभ्यर्चनीयाः (सन्ति)?

व्याख्या—नम्रत्वेनेति। नम्रत्वेन=विनयेन; उन्नमन्तः=उन्नतिं प्राप्नुवन्तः परगुणकथनैः, परेषाम्=अन्येषां गुणाः=सौजन्यादयः, तेषां कथनैः, तद्द्वारेणेत्यर्थः स्वान् = स्वकीयान्, गुणान्, ख्यापयन्तः = प्रसिद्धिं नयन्तः प्रकाशयन्त इति यावत्, परेषाम् अर्थे = प्रयोजने, परप्रयोजनसम्पादनायेत्यर्थः 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः। विततपृथुतरारम्भयत्नः पृथुतरः = अतिमहान् पृथुशब्दादतिशयार्थे तरप्प्रत्ययः, आरम्भः = उपक्रमो यस्य स पृथुतरारम्भः स चासौ यत्नः = उद्योगः विततः = विस्तृतः पृथुतरारम्भयत्नः येषां तथा भूता भवन्तः, स्वार्थात् = स्वीयानि (कार्याणि) सम्पादयन्तः प्रयोजनानि = साधयन्तः, आक्षेप रूक्षाक्षरमुखरमुखान्, आक्षेपेण = निन्दया रूक्षाणि नीरसानि कठोराणि अक्षराणि = वर्णाः तैः मुखरम् = वाचालमसम्बद्धप्रलापपूर्णं मुखम् = वदनं येषां तान्, दुर्जनान् = दुष्टपुरुषान्, क्षान्त्यैव = क्षमया सहनशीलतयैव, दूषयन्तः = दोषयुक्तान् कुर्वन्तः, साश्चर्यचर्याः साश्चर्या = आश्चर्यकारिणी चर्या = चेष्टा कार्यविशेषो येषां तादृशाः, अत एव बहुमताः, बहूनां लोकानां मताः = मान्याः सन्तः = सत्पुरुषाः, जगति = लोके, कस्य = कस्य पुरुषस्य, नाभ्यर्चनीयाः = न पूजनीयाः ? अपि तु सर्वस्य पूजनीयाः सन्तिः। स्रग्धरा वृत्तम्।

भावार्थः—'नम्रत्वमालम्ब्यैव स्वीयोन्नतिकरणं, परगुणवर्णनेनैव स्वगुण,

प्रख्यापनं प्रयत्नविशेषेण परार्थं संसाध्य तद्द्वारेणैव स्वार्थसाधनं, निन्दापं दुर्जनेष्वात्मनः सहनशीलतयैव दोषारोपणं चेत्येवं बहुविचित्रेण मान्यतां पूज्य स्वोपगताः सज्जनाः सर्वेषां लोकेऽनुकरणीया एवेति ।

भाषा—नम्रता से ही (झुकने से ही) उन्नति करनेवाले (ऊँचे उठनेवा दूसरों के गुणों के कथन द्वारा ही अपने गुणों को प्रकट करने वाले, दूसरों लिए बड़े भारी कार्यों के करने में फैले हुए उद्योग द्वारा ही अपने कार्य को ि करने वाले, निन्दावचन के रूखे अक्षरों से मुखर (वाचाल) मुखवाले दु को क्षमा के द्वारा ही अपराधी ठहरानेवाले, आश्चर्ययुक्त आचरणवाले, पर पूज्य सज्जन संसार में किसकी पूजा के पात्र नहीं होते ? ॥ ७० ॥

इदानीं परोपकारिणां स्वभावं वर्णयति—

भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥

अन्वयः—तरवः फलोद्गमैः नम्राः भवन्ति, धनाः नवाम्बुभिः दूरवि म्बिनः भवन्ति, सत्पुरुषाः समृद्धिभिः अनुद्धताः भवन्ति । एषः परोपकारि स्वभावः एव (अस्ति) ।

व्याख्या—भवन्तीति । तरवः = वृक्षाः, 'वृक्षो महीरुहः शाखी वि पादपस्तरुः' इत्यमरः, फलोद्गमैः = फलानां प्रादुर्भावैः, नम्राः = अधोलम्बि भवन्ति = जायन्ते, घनाः = मेघाः, नवाम्बुभिः = नूतनैर्वार्षिकैर्जलैः, दूरम दूरपर्यन्तं भूमावतिनीचैः प्रदेशेष्विति यावत्, विलम्बते = नम्रीभवन्तीति त भूताः भवन्ति, सत्पुरुषाः = सज्जनाः, समृद्धिभिः = ऋद्धेराधिक्यैः उन्नतिभि भैरिति यावत्, अनुद्धताः न उद्धताः विनीता इत्यर्थः, भवन्ति । एषः=अ परोपकारिणाम् = लोकोपकारपरायणानाम्, स्वभाव एव = प्रकृतिरेवास्ति वंशस्थं वृत्तम् ।

भावार्थः—फलवन्तो वृक्षाः सजला मेघाः समृद्धिशालिनः सज्जना यत्किल नम्राः भवन्ति तन्नूनं तेषां परार्थमेव न स्वार्थम् । लोकोपकारश्च तेषां स्वभावसिद्धो धर्म इति ।

भाषा—फल आने से वृक्ष झुक जाते हैं, नये जल से बादल दूर तक ल जाते हैं (झुक जाते हैं) और सज्जन समृद्धियों से नम्र हो जाते हैं। (झुकना या नम्र होना) परोपकारियों का स्वभाव ही है ॥ ७१ ॥

परोपकारेणैव नूनं शरीरस्य शोभा सम्भवती'त्याह--

श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन ।
विभाति कायः करुणापराणां परोपकारैर्न तु चन्दनेन ॥ ७२ ॥

अन्वयः--श्रोत्रं श्रुतेन एव विभाति कुण्डलेन न, पाणिः दानेन विभाति कङ्कणेन तु न, करुणापराणां कायः परोपकारैः विभाति चन्दनेन तु न ।

व्याख्या—श्रोत्रमिति । श्रोत्रम् = कर्णः, श्रुतेनैव = वेदशास्त्रश्रवणेनैव, विभाति = विशेषेण शोभते, कुण्डलेन = कर्णवेष्टनेन, 'कुण्डलं कर्णवेष्टनम्' इत्यमरः, न = न शोभते, पाणिः = हस्तः, दानेन = सत्पात्रेभ्यो धनादिवितरणेन, विभाति = विशेषेण शोभते, कङ्कणेन तु = करभूषणेन पुनः, 'कङ्कणं करभूषणम्' इत्यमरः, न = न शोभते, करुणापराणाम् = दयालुस्वभावानां पुरुषाणाम्, कायः = शरीरम् 'शरीरं वर्ष्म विग्रहः, कायो देहः' इत्यमरः, परोपकारैः = परहितकरणैः, विभाति = विशेषेण शोभते, चन्दनेन तु = गन्धसारलेपनेन पुनः, 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' इत्यमरः,न=न शोभते । उपजातिर्वृत्तम् ।

भावार्थः—कर्णं करं तथा शरीरं कुण्डलेन कङ्कणेन चन्दनेन च भूषयन्ति लोकाः, किन्तु कर्णादिषु शास्त्रश्रवणेन दानेन परोपकारेण च यादृशः सौन्दर्यविशेषः सञ्जायते, न तादृशः कुण्डलादिभिः । तात्पर्यन्तु—'कायक्लेशमनुभूयापि सन्तः करुणापराः परेषामुपकारमाचरन्तीति' ।

भाषा—कान शास्त्रश्रवण से ही शोभित होता है कुण्डल से नहीं, हाथ दान से शोभित होता है कंकण से नहीं, उसी प्रकार दयालु पुरुषों का शरीर परोपकारों से शोभित होता है चन्दन से नहीं ॥ ७२ ॥

सन्मित्रलक्षणं निरूपयन्नाह—

पापान्निवारयति योजयते हिताय
गुह्यं निगूहति गुणान् प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं निगदन्ति सन्तः ॥ ७३ ॥

अन्वयः—सन्तः सन्मित्रलक्षणम् इदं निगदन्ति—( यत् ) सन्मित्रं पापात् निवारयति, हिताय योजयते, गुह्यं निगूहति, गुणान् प्रकटीकरोति, आपद्गतं न जहाति, काले च ददाति

व्याख्या—पापादिति। सन्तः = सज्जनाः, सन्मित्रलक्षणम्, सन्मित्रस्य = निष्कपटसुहृदः लक्षणम् = चिह्नं स्वरूपं तत्, इदम् = वक्ष्यमाणम्, निगदन्ति = कथयन्ति निरूपयन्ति—यत् सन्मित्रं, पापात् = दुराचरणात्, निवारयति = निवर्तयति हिताय = हितकराय कर्मणे सत्कर्माचरितुमित्यर्थः, योजयते = प्रवर्तयति, गुह्यम् = संवरणीयम् गोपनीयं कर्मेति यावत्, निगूहति = नितरां संवृणोति सर्वां गोपयतीत्यर्थः, गुणान् = परोपकारादीन् सत्कर्मविशेषान्, प्रकटीकरोति = प्रकाशयति आपद्गतम् = विपद्ग्रस्तम्, न जहाति = न त्यजति, काले च = योग्यं समये ददाति = यथोचितं धनादिकं वितरति। अस्मिन् पद्ये चतुर्थचरणे 'निगदन्ती'त्य 'प्रवदन्ती'ति मुद्रितपुस्तकस्य पाठस्तु विचारणीयः। वसन्ततिलका वृत्तम्।

भावार्थः—हानिकरात्कर्मणो निवार्य स्वकीयं मित्रं श्रेयस्करे कर्मणि प्रेर पुरातनं तदीय दुष्कृतं सङ्गोप्य सुकृतं प्रकटीकुर्वन् विपत्तौ च सहभावमत्यजन् समयोचितं साहाय्यं कुरुते, स एव सन्मित्रमुच्यत इति।

भाषा—सज्जन लोग अच्छे मित्र का यह लक्षण बतलाते हैं, कि वह मनु को पाप से रोकता है, कल्याण के कामों में लगाता है, रहस्य (छिपाने यो बात) को छिपाता है, गुणों को प्रकट करता है, विपत्ति में पड़ने पर साथ न छोड़ता तथा समय पड़ने पर ( रुपया, पैसा आदि ) देता है ॥ ७३ ॥

'स्वत एव सज्जनाः परहिते प्रवृत्ता भवन्ती'त्युदाहरणैर्विशदीकरोति—

पद्माकरं दिनकरो विकचीकरोति
चन्द्रो विकासयति कैरवचक्रवालम्।
नाभ्यर्थिता जलधरोऽपि जलं ददाति
सन्तः स्वयं परहिते विहिताभियोगाः ॥ ७४ ॥

अन्वयः—नाभ्यर्थितः दिनकरः पद्माकरं विकचीकरोति, नाभ्यर्थितः चन्द्र कैरवचक्रवालं विकासयति, नाभ्यर्थितः जलधरः अपि जलं ददाति। ( हि ) सन्त स्वयं परहिते विहिताभियोगाः भवन्ति।

व्याख्या—पद्माकरमिति। नाभ्यर्थितः = अप्रार्थितः अनुक्त इति याव 'सुप् सुपे'ति समासः, दिनकरः = सूर्यः, पद्माकरम्, पद्मानाम् = कमलाना आकरः = खनिः उत्पत्तिस्थानं तम्, 'खनिः स्त्रियामाकरः स्यात्' इत्यमर

कमलवनमित्यर्थः विकचीकरोति, अविकचम् = अप्रफुल्लं विकचम् = प्रफुल्लं करोतीति तथा, विकासयतीत्यर्थः अभूततद्भावे च्विप्रत्ययः, 'प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः' इत्यमरः, नाभ्यर्थितः, चन्द्रः = सुधांशुः कैरवचक्रवालम्, कैरवाणाम् = कुमुदानां, चक्रवालम् = मण्डलं समूहः तत्, 'सिते कुमुदकैरवे' 'चक्रवालं तु मण्डलम्' इत्यमरौ, विकासयति = विकसितं करोति, नाभ्यर्थितः जलधरोऽपि = मेघोऽपि, जलम् = सलिलम्, ददाति = वितरति वर्षतीत्यर्थः, हि = युक्तमेव, सन्तः = सज्जनाः, स्वयम् = स्वतः अप्रार्थिताः स्वेच्छयैवेत्यर्थः, परहिते, परेषाम् = लोकानां हितम् = कल्याणं तस्मिन् विहिताभियोगाः, विहितः = कृतः अभियोगः = अभितो योगः सम्बन्धः प्रवृत्तिर्यैस्ते तादृशाः भवन्ति । वसन्ततिलका वृत्तम् ।

भावार्थः—स्वभावेनैव यथा सूर्यः कमलानां चन्द्रश्च कैरवाणां विकासं कुर्वन् दृश्यते, यथा च मेघः स्वयमप्रार्थित एव जलं वर्षन् पुरस्तादुपस्थितो भवति लोके, तथैव केनाप्यनुक्ता अपि सज्जनाः परेषां हितकारकं कर्म कर्तुं प्रवृत्ताः सन्तो दृष्टिपथं प्रयान्तीति ।

भाषा—बिना प्रार्थना किये ही सूर्य कमल के समूह को विकसित करता है, चन्द्रमा कैरवों के समूह को प्रफुल्लित करता है तथा मेघ ( प्राणियों को ) जल देता है । सज्जन लोग अपने आप ही दूसरों की भलाई में लगे रहते हैं ॥

'तत्तत्कार्यविशेषैर्मनुष्याणामुत्तमत्वं मध्यमत्वमधमत्वं तथाऽधमाधमत्वं भवती'त्येतत्साम्प्रतं प्रतिपादयति—

एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाऽविरोधेन ये ।
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ ७५ ॥

अन्वयः—( ते ) सत्पुरुषाः एके ( सन्ति ) ये स्वार्थं परित्यज्य परार्थघटकाः ( भवन्ति ), ( ते ) तु सामान्याः ( सन्ति ) ये स्वार्थाऽविरोधेन परार्थम् उद्यमभृतः ( भवन्ति ) ते अमी मानुषराक्षसाः ( सन्ति ) ये स्वार्थाय परहितं निघ्नन्ति, ये तु निरर्थकं परहितं घ्नन्ति, ते के ( सन्ति ), ( वयं ) न जानीमहे ।

व्याख्या—एके इति । ते सत्पुरुषाः = सज्जनाः, एके = एकद्वित्र्याकाः

विरला इत्यर्थः, एकशब्दोऽत्यल्पवाची, सन्ति, ये स्वार्थम् = स्वं प्रयोजन परित्यज्य = दूरे प्रक्षिप्य, परार्थघटकाः = परेषां प्रयोजनस्य साधकाः भवन्ति, पुरुषास्तु सामान्याः = साधारणा नाधिका न चाल्पाः सन्ति ये स्वार्थाऽविरोधे स्वार्थस्य = स्वकार्यस्य अविरोधेन = प्रातिकूल्याभावेन आनुकूल्येनेति याव परार्थम् = परेभ्यः, लोकानां कृते, तादर्थ्ये चतुर्थी, उद्यमभृतः, उद्यमम् = उद्योगं प्रयत्नं बिभ्रति = धारयन्ति कुर्वन्तीति यावत् ते, क्विप्प्रत्ययः, भवन्ति ते = विचित्रचारित्राः, अमी = वक्ष्यमाणाः, मानुषराक्षसाः, मानुषेषु = मनुष्ये 'मनुष्या मानुषः' इत्यमरः, राक्षसः = राक्षसरूपाः, राक्षसप्रकृतयो मनु इत्यर्थः, अथवा मानुषाश्च ते राक्षसाः, मनुष्या अपि राक्षसाः, राक्षसकर्मक रिणो मनुष्यत्वेन हीना मनुष्या इत्यर्थः, सन्ति, ये, स्वार्थाय = स्वकार्यार्थ परहितम्, परेषां हितम् = भद्रम्, निघ्नन्ति = नाशयन्ति, विघातयन्ति, ये तु ये पुनः पुरुषाः, परहितम् = अन्येषामभीष्टं कार्यम्, निरर्थकम्, निर्गतः अ यस्मात्तदिति क्रियाविशेषणम्, किमपि स्वकीयं प्रयोजनं विनैवेत्यर्थः, घ्नन्ति विध्वंसयन्ति, ते = तत्कार्यविध्वंसकाः, के = किन्नामधेयाः, सन्तीति, वय न जानीमहे = न विद्मः। ज्ञाधातोरात्मनेपदित्वं हि बहुप्रचारात् सत्कवी समाजेन स्वीकृतम् तत्रापि प्रायो वर्तमानकालिक एव तत्प्रयोगो दृश्यते।

भावार्थः—सर्वथा स्वार्थमुपेक्ष्य परार्थं साधयन्तः सन्तो जगत्यस्मिन्नुत्त कोटौ प्रविष्टा विरलाः सन्ति, स्वार्थेन सम्मिश्रं परार्थं साधयन्तः साधार मध्यमगतिकाः पुरुषाश्च क्वचित्क्वचिद् दृश्यन्त, स्वकार्यार्थं परकार्यार्थं विध्वंस मनुष्येष्वधमा अपि बहवो वर्तन्ते, किन्तु परेषामहितमेव स्वार्थं मन्यमाना येवाचरन्तो वस्तुतः स्वार्थेन परार्थेन च हीना जनाः पशूनामिव समाजे स्थि अधमशिरोमणयो गण्यन्ते, ततोऽप्यधस्ताद्वा किमप्यनिर्वचनीयं परदमा भवन्तीति। अत्र प्रथमः सर्वथा स्वार्थेन हीनः द्वितीयः स्वार्थपरार्थमुभाभ संयुतः, तृतीयः स्वार्थी परार्थेन हीनः, चतुर्थश्च स्वार्थपरार्थाभ्यां हीन इति ते स्वरूपतोऽवगन्तव्यः।

भाषा—संसार में कुछ लोग तो सज्जन होते हैं जो अपने स्वार्थ को छो कर दूसरों की भलाई करते हैं और कुछ लोग साधारण श्रेणी के होते हैं अपने स्वार्थ के विरुद्ध न जाकर दूसरे के लिये उद्यम (परिश्रम) करते हैं, अपने स्वार्थ के लिये दूसरों के हित का नाश करते हैं वे तो मनुष्यों में राक्ष स्वरूप हैं, परन्तु जो व्यर्थ ही दूसरों के हित का नाश करते हैं, वे कौन हैं ? हम नहीं जानते॥ ७४॥

सतां मित्रतायाः स्वरूपमिदानीमुदाहरणेन विशदीकरोति—

क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः
क्षीरोत्तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः।
गन्तुं पावकमुन्मनस्तदभवद् दृष्ट्वा तु मित्रापदं
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥ ७६ ॥

अन्वयः—पुरा क्षीरेण आत्मगतोदकाय अखिलाः ते गुणाः दत्ताः हि, तेन पयसा क्षीरोत्तापम् अवेक्ष्य स्वात्मा कृशानौ हुतः, तत् (क्षीरं) तु मित्रापदं दृष्ट्वा पावकं गन्तुम् उन्मनः अभवत्, तेन जलेन युक्तं (सत्) शाम्यति। तु पुनः सतां मैत्री ईदृशी (भवति)।

व्याख्या—क्षीरेणेति। पुरा=पूर्वम्, क्षीरेण=दुग्धेन, आत्मगतोदकाय, आत्मनि=स्वाभ्यन्तरे गतम्=प्राप्तं संमिश्रं तच्च तत् उदकम्—जलं तस्मै; अखिला;=सर्वे, ते=प्रसिद्धाः स्वकीया गुणाः=धवलत्वमधुरत्वादायः, दत्ता हि=समर्पिताः खलु, तेन=दुग्धसंमिश्रेण, पयसा=जलेन, 'सलिलं कमलं जलम्, पयः कीलालम्' इत्यमरः, क्षीरोत्तापम् क्षीरस्य=दुग्धस्य उत्तापम्= अग्निसंयोगादुद्भूतं सन्तापम्, अवेक्ष्य=दृष्ट्वा, स्वात्मा=स्वशरीरम्. कृशानौ= अग्नौ, 'अग्निर्वैश्वानरो वह्नि'रित्यारभ्य 'कृशानु पावकोऽनलः' इत्यमरः, हुतः= प्रक्षिप्तः, तत्=सन्तप्तम् (क्षीरं तु=दुग्धं पुनः) मित्रापदम् मित्रस्य=सुहृदो जलस्य आपदम्=शरीरत्यागरूपां विपदम्, दृष्ट्वा=विलोक्य, पावकम्=अग्निम्, गन्तुम्=प्रवेष्टुम्, उन्मनः=उत्कम् उत्कण्ठितमिति यावत् 'उत्कउन्मनाः' इत्यमरः, अभवत्=भवतीत्यर्थः, वर्तमानार्थे लङ्, तेन=मिश्रेण, जलेन=सलिलेन, युक्तम्=सम्बद्धं सत् शाम्यति=सन्तापशून्यं शान्तं भवति; विकारपरित्यागेन स्वस्वरूपं प्राप्नोतीत्यर्थः। तु पुनः=युक्तम् निश्चयेन वा सताम्,=सज्जनानाम्, मैत्री=मित्रता स्नेह, ईदृशी=पूर्वोक्तसदृशी स्थिरा समवेदनाशालिनीति यावत्, भवति। शार्दूलविक्रीडित वृत्तम्।

भावार्थः—दुग्धेन संमिश्रं जलं तदेकरूपं दृष्टिगत भवति, अग्निसंयोगेन पुनस्तत्सारः दुग्धात्तज्जलं बहिर्निर्गत्य, शुष्यति क्रमेण च जले भस्मीभूते तदेव दुग्धमुच्छ्वसित सदग्नौ पतितुमुद्यतं भवति, जले प्रक्षिप्ते पुनः शान्तं पूर्ववत्स- ज्ञायत इति प्रत्यक्षमेव सर्वेषाम्। अत्र दुग्धजलयोः स्थिति स्वरूपं च दर्श-

यता कविना 'उदारः पुरुषः स्वसमीपमागताय सुहृदे स्वीयं सर्वस्वमर्पयति, क्रमे तौ गाढस्नेहसम्पन्नौ परस्परं दुःखे दुःखिनौ तदर्थं कष्टभारसहौ वियोगाद् भीतौ च भवतः, स पुनरुदारः समागतेन मित्रेण सहयोगं प्राप्यैव निवृंति प्राप्नोती'ति सतां स्नेहरीतिः प्रकटीकृता। तत्त्वं तु 'महान्तः पुरुषाः शरणागतरक्षणं सय स्नेहभावपरिपालनमीदृशं कुर्वन्ती'ति।

भाषा—पहले दूध ने अपने मिले हुए पानी को अपने सभी गुण दे दिये फिर (जब दूध आग पर रक्खा गया उस समय) दूध का जलना देखकर पानी ने अपने को आग में जला दिया, अपने मित्र का नाश देखकर दूध आग में जाने के लिए उद्विग्न ( व्याकुल ) हो गया फिर जल के मिलने पर शान्त हुआ। अहा सज्जनों की मित्रता ऐसी होती है ॥ ७६ ॥

'महतामवर्णनीयं चरितं भवती'त्युदाहरणमुखेन ध्वनयन्नाह----

इतः स्वपिति केशवः कुलमितस्तदीयद्विषा-
मितश्च शरणार्थिनां शिखरिणां गणाः शेरते।
इतोऽपि वडवानलः सह समस्तसंवर्तकै-
रहो! विततमूर्जितं भरसहं च सिन्धोर्वपुः॥ ७७ ॥

अन्वयः---इतः केशवः स्वपिति, इतः तदीयद्विषां कुलं ( तिष्ठति ), इतः च शरणार्थिनां शिखरिणां गणाः शेरते, इतः अपि समस्तसंवर्तकैः सह वडवानलः (तिष्ठति)। अहो! सिन्धोः वपुः विततम् ऊर्जितं भरसह च (वर्तते)।

व्याख्या---इत इति। इतः = एकस्मिन् प्रदेशे, केशवः = विष्णुर्भगवान् स्वपिति = शेते, इतः = अन्यस्मिन् प्रदेशे, तदीयद्विषाम् = भगवतो विष्णोः शत्रूणां दैत्यानाम्, कुलम् = समूहः, तिष्ठतिः, इतश्च = इतरस्मिन्प्रदेशे पुनः, शरणार्थिनाम् = शरणागतानाम् आत्मरक्षाभिलाषिणामिति यावत्, शिखरिणाम् = मैनाकादिपर्वतानाम्, 'महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः' इत्यमरः, गणाः = समूहाः, शेरते = स्वपन्ति, इतोऽपि = अपरस्मिन्प्रदेशेऽपि, समस्तसंवर्तकैः, समस्ता = सर्वे च संवर्तकाः = तन्नामकाः प्रलयकालिका अग्निविशेषा मेघविशेषा वा तैः, सह = समम्, 'साकं सत्रा समं सह' इत्यमरः, वडवानलः = अन्तर्गतो वाडवनामकोऽग्निः, 'वाडवो वडवानलः' इत्यमरः, तिष्ठति, अहो =

माश्चर्यम्, सिन्धोः=समुद्रस्य 'समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः, उदन्वानुदधिः सिन्धुः' इत्यमरः, वपुः=शरीरम्, 'गात्रं वपुः, संहननं शरीरम्' इत्यमरः, विततम्=विस्तृतं परममहत्परिमाणम्, ऊर्जितम्=बलविशेषशालि, अतएव भरसहञ्च=केशवादिसकलभारधारणसमर्थं च वर्तते। पृथ्वी वृत्तम् ।

भावार्थः—केशवादीनां वडवानलान्तानां सर्वेषामाश्रयदाता महत्तमं भारं वहन् विचित्रचरितो विराट्स्वरूपः प्रलयकालिकः समुद्रः सुतरां शोभित इति। 'अत्र सर्वेषां शरणमागतानां महतामप्याश्रयदातारः सत्पुरुषाः महामहिमशालिनो नूनमवर्णनीयचरिता एवे'ति ध्वनितं भवति।

भाषा—अहो ! समुद्र का शरीर कैसा विस्तृत, बलिष्ठ तथा भार सहनेवाला है ( इसमें ) एक ओर विष्णु भगवान् सो रहे हैं तो दूसरी ओर उनके शत्रुओं ( दानवों ) का खानदान पड़ा हुआ है, इधर शरण चाहने वाले पर्वतों का समूह लेटा हुआ है तो उधर वडवानल सभी प्रलयकालिक अग्नियों अथवा बादलों के साथ विराजमान है ॥ ७७ ॥

पुनरपि सज्जनानां चेष्टितं निर्दिशति—

तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं कृथाः<br>
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम् ।<br>
मान्यान्मानय विद्विषोऽप्यनुनय प्रख्यापय प्रश्रयं<br>
कीर्तिं पालय दुःखिते कुरु दयामेतत् सतां चेष्टितम् ॥७८॥

अन्वयः—( हे मनुष्य ! ) तृष्णां छिन्धि, क्षमां भज, मदं जहि, पापे रतिं मा कृथाः, सत्यं ब्रूहि, साधुपदवीम् अनुयाहि, विद्वज्जनं सेवस्व, मान्यान् मानय, विद्विषः अपि अनुनय प्रश्रयं प्रख्यापय, कीर्तिं पालय, दुःखिते दयां कुरु—एतत् सतां चेष्टितम् अस्ति ।

व्याख्या—तृष्णामिति । हे मनुष्य ! तृष्णाम्=स्पृहाम् 'तृष्णे स्पृहापिपासे द्वे' इत्यमरः; छिन्धि=द्विधा कुरु त्यजेत्यर्थः, क्षमाम्=सहनशीलताम्, भज=सेवस्व, मदम्=दर्पम् 'दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः' इत्यमरः, जहि=विनाशय, पापे=दुष्कर्मणि, रतिम्=प्रेम, मा कृथाः=न विधेहि, सत्यम्=तथ्यम्, ब्रूहि=वद, साधुपदवीम्=सन्मार्गम्, 'सन्मार्गा-

ऽवपन्थानः पदवी' इत्यमरः, अनुयाहि=अनुसर । विद्वज्जनं=पण्डितमण्डली
सेवस्व=शुश्रूषस्व, मान्यान् मानः=पूजा तद्योग्यान् पूज्यानित्यर्थः, मानय
पूजय, विद्विषोऽपि=शत्रूनपि, 'द्विड्विपक्षाहितामित्रदस्युशास्त्रवशत्रवः' इत्यम
अनुनय=सान्त्वय प्रसादयेत्यर्थः, प्रश्रयम्=विनयम्, प्रख्यापय=प्रकटय, कीर्तिम्
यशः, पालय=रक्ष, दुःखिते दुःखं सञ्जातमस्येति तस्मिन्, जातावेकवचनमिद
दुःखाकुलेष्वित्यर्थः, 'तदस्य सञ्जातं तारकादिभ्य इतच्' इत्यनेन इतच्प्रत्यय
दयाम्=कृपाम्, कुरु=विधेहि—एतत्=इदं सर्वम्, सताम्=सत्पुरुषाणा
चेष्टितम्=व्यापारः आचरणमिति यावत्, अस्ति । शार्दूलविक्रीडित वृत्तम् ।

भावार्थः—तृष्णाच्छेदादिकं सदाचारस्वरूपं कल्याणकरं मनुष्या
कर्तव्यमिति ।

भाषा—लोभ छोड़ो, क्षमा धारण करो, गर्व का त्याग करो, पाप में
( रुचि ) न रखो, सत्य बोलो, सज्जनों के मार्ग का अनुसरण करो, विद्वानों
शरण लो, पूज्य लोगों का आदर करो,शत्रुओं को भी मनाओ, नम्रता दिखला
यश की रक्षा करो तथा दुःखी जनों पर दया करो—यह सज्जनों
आचरण है ॥ ७८ ॥

'उदारचरिताः सत्पुरुषाः प्रायो दुर्लभा एवे'त्याह—

मनसि वचसि काये पुण्यपीयूषपूर्णा-
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ ७९ ॥

अन्वयः—मनसि वचसि काये ( च ) पुण्यपीयूषपूर्णाः, उपकारश्रेणि
त्रिभुवनं प्रीणयन्तः, परगुणपरमाणून् पर्वतीकृत्य निजहृदि नित्यं विकसन्तः स
कियन्तः सन्ति ?

व्याख्याः—मनसीति । मनसि=चित्ते, वचसि=वचने, काये च=शरी
च, पुण्यपीयूषपूर्णाः, पुण्यम्=सुकृतमेव पीयूषम्=अमृतम् 'पीयूषममृतं सु
इत्यमरः, तेन पूर्णाः=परिपूर्णाः, मनोवाक्कायैः सर्वदा सत्कर्मैव कुर्वन्त इत्य
उपकारश्रेणिभिः, उपकाराः=हिताचरणानि तेषां श्रेणयः=पङ्क्तयः परम्प

इति यावत्, ताभिः, 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी' इत्यमरः, त्रिभुवनम् = त्रयाणां भुवनानां समाहारो जगत्त्रयमित्यर्थः, प्रीणयन्तः = सन्तोषयन्तः, परगुण-परमाणून्, परेषाम् = लोकानाम् सौजन्यादीनां परमाणवः = अदृश्यतमा अत्यल्पा भागाः तान्, पर्वतीकृत्य = अतिमहतः पर्वतानिव कृत्वा। अतिस्वल्परूपा-नपि परेषां गुणान् अतिवृहद्रूपान् विज्ञायेत्यर्थः, निजहृदि = आत्मनो हृदये, विकसन्तः = विकासं हर्षं प्राप्नुवन्तः, सन्तः = सज्जनाः, कियन्तः = कियत्स-ङ्ख्याकाः सन्ति ? अत्यल्पा दुर्लभा एव सन्तीत्यर्थः। मालिनी वृत्तम्।

भावार्थः—हितमिच्छन्तो हितं वदन्तो हितं कुर्वन्तः सकललोकोपकारपरा-यणा गुणग्राहिणः सत्पुरुषाः क्वचिदेव सौभाग्योदयेन कदाचित् केचिदुपलब्धा भवन्तीति।

भाषा—मन, वचन और शरीर में सत्कर्मरूपी अमृत से भरे हुए तीनों लोकों को अनेक उपकारों से सन्तुष्ट करनेवाले तथा दूसरे के लेशमात्र गुण को नित्य ही पर्वताकार ( बहुत बड़ा ) बनाकर अपने हृदय में प्रसन्न होने वाले सज्जन ( संसार में ) कुछ ही हैं ( अथवा कितने हैं ?) ॥ ७९ ॥

'निर्गुणानपि स्वाश्रितान् गुणवतः कुर्वंतो गुणवन्तो नूनं, बहुमानपात्रं भवन्ती'ति मलयपर्वतान्योक्तिविधया बोधयन्नाह—

किं तेन हेमगिरिणा रजताद्रिणा वा
यत्राश्रिताश्च तरवस्तरवस्त एव।
मन्यामहे मलयमेव यदाश्रयेण
कङ्कोलनिम्बकुटजा अपि चन्दनाः स्युः ॥ ८० ॥

अन्वयः—तेन हेमगिरिणा रजताद्रिणा वा किम्, यत्र च आश्रिताः तरवः ते एव तरवः ( तिष्ठन्ति )। ( वयम् ) मलयम् एव मन्यामहे, यदाश्रयेण कङ्कोलनिम्बकुटजाः अपि चन्दनाः स्युः।

व्याख्या—किं तेनेति। तेन = वक्ष्यमाणलक्षणेन, हेमगिरिणा = मेरु-पर्वतेन, 'मेरुः सुमेरुर्हेमाद्रि'रित्यमरः, रजताद्रिणा वा = कैलासपर्वतेन वा, 'कैलासो रजताचल' इति कोषः, किम् = किं प्रयोजनम् ? न किमपीत्यर्थः यत्र च—यत्प्रदेशे च, आश्रिताः = स्थिताः, तरवः = वृक्षाः, त एव = पूर्वरूपाः साधारणाः

एव, तरवः = वृक्षाः तिष्ठन्ति । वय, मलयमेव = मलयनामकं पर्वतमेव मन्
महे = बहुमानदृशा पश्यामः, यदाश्रयेण कारणेन यत्प्रदेशावस्थानसौभाग्ये
त्यर्थः, कङ्कोलनिम्बकुटजा अपि = कङ्कोलनिम्बकुटजनामका वृक्षा अ
चन्दनाः = चन्दनवृक्षाः चन्दनवृक्षसदृशाः सुगन्धिता इति यावत्, स्युः = भवे
भवन्तीत्यर्थः । वसन्ततिलका वृत्तम् ।

भावार्थः—नामकृतं महत्त्वं निरर्थकं गुणकृतं तत् सार्थकम्, मेरुकैला
पर्वतौ व्यर्थजीवनौ न कदाप्यादरणीयौ भवितुमर्हतः, यौ तान् सामान्यरू
न्निजाश्रितान् वृक्षान् सविशेषरूपान् न कुर्वाते । एकस्य मलयपर्वतस
श्लाघ्यं जन्म बहुमतं लोके यः किल कङ्कोलादीन् सुभगचन्दनसौरभसम्भारसम्
तान् करोतीति ।

भाषा—उस सुवर्ण पर्वत ( सुमेरु ) अथवा रजतपर्वत ( कैलास ) से क
लाभ, जहाँ रहने वाले पेड़, पेड़ ही रह गये । हम तो मलयपर्वत को ही मानते
जिसका आश्रय लेने से कङ्कोल ( शीतलचीनी ), नीम तथा कुटज ( पत्थरफू
के पेड़ भी चन्दन हो जाते हैं ॥ ८० ॥

'प्रारब्धं कर्म पूर्वं कृत्वैव विश्रमितव्य'मित्येवमुदाहरणगर्भमुपदिशन्नाह—

**रत्नैर्महार्हैस्तुतुषुर्न देवाः न भेजिरे भीमविषेण भीतिम् ।**
**सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः ।। ८१**

अन्वयः—देवाः महार्हैः रत्नैः न तुतुषुः, भीमविषेण भीतिं न भेजि
सुधां विना विरामं न प्रययुः । ( हि ) धीराः निश्चितार्थात् न विरमन्ति ।

व्याख्या—रत्नैरिति । देवाः = सुराः, समुद्रमन्थनसमय इति शेष
महार्हैः = बहुमूल्यैः, 'महाब्धे'रिति पाठे—महाब्धेः = महतः क्षीरसागरस
तत्सम्बन्धिभिरित्यर्थः, रत्नैः = ततो निर्गतैश्चतुर्दशसङ्ख्याकैः श्रेष्ठवस्तुभिरन्यै
मणिभिः न तुतुषुः = न सन्तुष्टाः बभूवु, भीमविषेण = भयङ्करेण का
कूटाख्येन गरलेन हेतुत्वमात्रविवक्षायां तृतीया, भीतिम्, न भेजिरे = न प्रा
सुधाम् = अमृतम्, अमृतप्राप्तिमिति यावत्, विना = अन्तरेण, विरामम् =
स्वकार्याद्विश्रामम्, न प्रययुः = न लेभिरे, अमृतं प्राप्यैव मन्थनकार्याद्विरत
बभूवुरित्यर्थः । हि = युक्तमेव; धीराः = धैर्यवन्तः, निश्चितार्थात् = प्रतिज्ञात

द्विषयात्, न विरमन्ति = पराङ्मुखा न भवन्ति, प्रतिज्ञातं विषय पूरयन्त्येवेत्यर्थः, अथवा = निश्चितार्थादिति ल्यब्लोपे पञ्चमी, निश्चितार्थमपूरयित्वेति यावत्, न विरमन्ति = विरता न भवन्ति, प्रतिज्ञातं विषयं पूर्णं कृत्वैव विश्रान्ति लभन्त इत्यर्थः। उपजातिवृत्तम्।

भावार्थः—'वीरपुरुषाः प्रतिज्ञातं पूरयन्ती'ति बोधयन्ती देवाः सुधाः लब्धुकायाः समुद्रमन्थने प्रवृत्ता रत्नजातैरितरैरसन्तुष्यन्तो विषादपि भीतिमप्राप्नुवन्तः सुधां प्राप्यैव निवृत्ति प्राप्नुवन्ति इति।

भाषा—देवता लोग बहुमूल्य रत्नों से सन्तुष्ट नहीं हुए और भयंकर विष से भी नहीं डरे, वे बिना अमृत पाये रुके नहीं। इस तरह धीर ( बुद्धिमान् तथा धैर्यवान्) पुरुष सङ्कल्पित (अभीष्ट) वस्तु को बिना प्राप्त किये नहीं रहते ॥८१॥

'कार्याभिलाषी पुरुषः सुखदुःखयोः समानमेव मूल्यं कलयती'ति तच्चेष्टया स्फुटीकरोति—

क्वचित् पृथ्वीशय्यः क्वचिदपि च पर्यङ्कशयनः
क्वचिच्छाकाहारः क्वचिदपि च शाल्योदनरुचिः।
क्वचित् कन्थाधारी क्वचिदपि च दिव्याम्बरधरो
मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ ८२ ॥

अन्वयः—कार्यार्थी मनस्वी (पुरुषः) क्वचित् पृथ्वीशय्यः, अपि च क्वचित् पर्यङ्कशयनः, क्वचित् शाकाहारः, अपि च क्वचित् शाल्योदनरुचिः, क्वचित् कन्थाधारी, अपि च क्वचित् दिव्याम्बरधरः, सन् दुःखं न गणयति सुखं च न गणयति।

व्याख्या—क्वचिदिति। कार्यार्थी = कार्याभिलाषी कार्यसाधने प्रवृत्त इति यावत्, मनस्वी प्रशस्तं मनोऽस्यास्तीति सः प्रशंसायां विनिप्रत्ययः; स्थिरचित्त इत्यर्थः, तादृशः, पुरुषः, क्वचित् = कुत्रचित् समये देशे वा, पृथ्वीशय्यः, पृथ्वी = भूमिः शय्या शयनस्थानं यस्य सः, अपि च = किञ्च, क्वचित् = कुत्रचित्, पर्यङ्कशयनः, पर्यङ्के = मञ्चे शयनम् = स्वापः यस्य सः, 'शयनं मञ्चपर्यङ्कपल्यङ्काः' स्यान्निद्रा शयनं स्वापः' इत्यमरो, क्वचित् शाकाहारः

शाकम्=भोजनसाधनं पत्रपुष्पादिकम् आहार:=भोजनं यस्य सः, 'शाका पत्रपुष्पादि' जग्धिस्तु भोजनम्, जेमनं लेह आहार' इत्यमरौ, अपि च क्वचि शाल्योदनरुचिः, शाल्योदने=कलमाद्ये षष्टिकाद्ये वाऽन्ने रुचि:=स्पृहा यः सः, 'शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी' 'स्पृहायां च गभस्तौ रुचिः स्त्रियाम्' क्वचित् कन्थाधारी, कन्थाम्=जीर्णवस्त्रखण्डनिर्मितं प्रावरणवि धारयति=बिभर्तीति सः, अपि च क्वचित्, दिव्याम्बरधरः, दिव्याम्ब दिव्यम्=अलौकिकं सुन्दरं यत् अम्बरम्=वस्त्रम् तत् 'अम्बरं व्योम्निवासी इत्यमरः, धरति=परिदधातीति तथाभूतः, सन्, दुःखम्=व्यथाम्, 'पीडा बा व्यथा दुःखमि'त्यमरः, न गणयति=न किञ्चिन्मन्यते, उपेक्षते इत्यर्थः, च=शर्म च, 'शर्मशातसुखानि च' इत्यमरः, न गणयति=नापेक्षते। शिखरि वृत्तम्।

भावार्थः—कार्यसाधनविधौ दृढेन चेतसा प्रवृत्तः समयानुसारं कुसुमको पर्यङ्के तृणाङ्कुरपूर्णायां भूमौ वा शयानः सरसं शाल्यन्नं नीरसं शाकं वा भुञ्ज सुन्दरं नूतनं जर्जरं पुराणं वा वसनं वसानः सुखी दुःखी वा न भवतीति।

भाषा—कहीं पृथ्वी पर सोता है तो कहीं पलंग पर भी सो लेता है, क साग खाता है तो कहीं धान के भात का स्वाद लेता है, कहीं गुदड़ी पहनता तो कहीं उत्तम वस्त्र भी धारण कर लेता है। (इस प्रकार) कार्य की सि चाहने वाला मनस्वी पुरुष दुःख तथा सुख की परवाह नहीं करता ॥ ८२ ॥

'सर्वोत्कृष्ट भूषणं शीलमेवे'त्येवं विवक्षुस्तत्साधनीयानि तानि तानि भूषणानि वर्णयन्नाह—

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः।
अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ ८३ ॥

अन्वयः—ऐश्वर्यस्य विभूषणं सुजनता, शौर्यस्य विभूषणं वाक्संय ज्ञानस्य विभूषणम् उपशमः, श्रुतस्य विभूषणं विनयः वित्तस्य विभूषणं

व्ययः, तपसः विभूषणम् अक्रोधः, प्रभवितुः विभूषणं क्षमा, धर्मस्य विभूषणं निर्व्याजता ( अस्ति )। किन्तु सर्वेषाम् अपि परं भूषणं सर्वकारणम् इदं शीलम् ( अस्ति )।

व्याख्या—ऐश्वर्यस्येति। ऐश्वर्यस्य=प्रभुत्वस्य शासनशक्तेरिति यावत्, विभूषणम्=अलङ्कारः, सुजनता=सौजन्यम्, अस्ति, सौजन्यस्यैव प्रभुत्वनियामकत्वात्, शौर्यस्य=विक्रमस्य विभूषणं, वाक्संयमः=वचनस्य नियमनम्, समयोचितं वचनम् आत्मश्लाघाकरवचनाऽऽडम्बराभाव इत्यर्थः, ज्ञानस्य=बोधस्य, विभूषणम् उपशमः=शान्तिः अनुद्वेगिता, शान्त्या अलाभे ज्ञानं व्यर्थमेवेत्यर्थः, श्रुतस्य=शास्त्रश्रवणस्य, विभूषणं विनयः=नम्रता, अविनीतस्य श्रुतं दोषायैव कल्पत इत्यर्थः, वित्तस्य=द्रव्यस्य, द्रव्यं वित्त' मित्यमरः विभूषणं पात्रे=योग्ये पुरुषे व्ययः=विनियोगः दानमिति यावत्, तस्यैव सदुपयोगरूपत्वात्, तपसः=तपश्चरणस्य, विभूषणम्; अक्रोधः=क्रोधस्याभावः, क्रोधस्य तपसो विघातकत्वात्, प्रभवितुः=निग्रहानुग्रहसमर्थस्य पुरुषस्य, विभूषणं क्षमा=सहनशीलता, निग्रहशक्तेरप्रयोग इति यावत्, तथा सत्येव लोकप्रियतायाः सम्भवात्, धर्मस्य=वेदबोधितकर्तव्यताविशेषस्य, विभूषणं निर्व्याजता=निश्छलत्वं दम्भराहित्यम् अस्ति, सव्याजस्य धर्मस्य निष्फलत्वादित्यर्थः। किन्तु सर्वेषामपि पूर्वोक्तानां सकलामैश्वर्यादीनामपि सकलपुरुषाणामपि वा, परम्=श्रेष्ठं सुजनतादिभ्य उत्कृष्टम्, सर्वकारणम्, सर्वेषाम्=समस्तानाम् ऐश्वर्यादीनाम् इतरेषां वा सकलवस्तूनां कारणम्=निदानभूतम्, इदम्=एतत् शीलम्=सद्वृत्तम् अस्ति, 'शीलं स्वभावे सद्वृत्ते' इत्यमरः, शार्दूलविक्रीडितं वृत्तम्।

भावार्थः—सौजन्यादिकमैश्वर्यादिकस्य सौन्दर्यं सर्वतः सम्पादयन्ति, परमेकं शीलं सकलस्यास्य वस्तुजातस्य मूलभूतं सर्वोत्कर्षेण वर्तते। सदाचरणं नाम शीलं सर्वेषु भूषणायते, एतेन विना सर्वेषां हतप्रभत्वादिति।

भाषा—सज्जनता सम्पत्ति का, मितभाषिता शूरता का, चित्त की शान्ति ज्ञान का, नम्रता विद्या का, सुपात्र में खर्च करना धन का, क्रोध का न होना तपस्या का, क्षमा समर्थ का तथा निश्छलता धर्म का भूषण ( गहना ) है; किन्तु (इन) सबका कारणस्वरूप सदाचार सभी का भूषण (गहना) है ॥८२॥

'वीरसत्त्वाः पुरुषाः कथमपि व्यवसायं न त्यजन्ती'ति प्रतिपादयति—

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम्।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ॥ ८४ ॥

अन्वयः—नीतिनिपुणाः निन्दन्तु यदि वा स्तुवन्तु, लक्ष्मीः समाविशतु यथेष्टं गच्छतु, मरणम् अद्यैव वा अस्तु वा युगान्तरे अस्तु, ( परं ) धी न्याय्यात् पथः पदम् ( अपि ) न प्रविचलन्ति।

व्याख्या:—निन्दन्त्विति। नीतिनिपुणाः=नीतिशास्त्रविदः, पण्डि निन्दन्तु=निन्दां कुर्वन्तु अप्रसन्ना भवन्तु यदि वा=अथवा, स्तुवन्तु=स्तु कुर्वन्तु प्रसन्ना भवन्तु, लक्ष्मीः=सम्पत्तिः, 'सम्पत्तिः श्रीश्च लक्ष्मीश्च' इत्यम समाविशतु=समीपमागच्छतु; वा=अथवा, यथेष्टम्=स्वेच्छानुसारम्, क्रि विशेषणमिदम्, गच्छतु=अपसर्पतु दूरे भवतु, मरणम्=मृत्युः, 'अन्तो न द्वयोर्मृत्युर्मरण' मित्यमरः, अद्यैव वा=अस्मिन्नेव काले वा, अस्तु=भवतु, अथवा, युगान्तरे=अन्यस्मिन् युगे, अस्तु, परं धीराः गम्भीरचित्ताः पुरुष न्याय्यात्=न्यायादनपेतात्, न्यायोचितादिति यावत् 'धर्मपथ्यर्थन्यायाद पेते' इत्यनेन यत्प्रत्ययः, पथः=मार्गात्, पदमपि=एकं चरणमपि, न प्रविच लन्ति=न स्खलन्ति, न्यायमार्गमनुसरन्त्येवेत्यर्थः। वसन्ततिलका वृत्तम्।

भावार्थः—गम्भीराः पुरुषा निन्दास्तुत्यादिकं किमप्यनपेक्ष्य कद न्यायमार्गादपि पराङ्मुखा न भवन्ति, तत्परतया च तदुचितं न्यायसङ्गत कार्यं सर्वदाऽनुतिष्ठन्तीति।

भाषा—नीति ( उचित तथा अनुचित का विवेक ) में पारङ्गत वि लोग प्रशंसा करें अथवा निन्दा करें, इच्छानुसार सम्पत्ति अपने पास अथवा ( अपने पास से ) चली जाय, आज ही मृत्यु हो जाय अथवा एक के बाद हो, किन्तु धीर लोग न्यायसङ्गत मार्ग से एक कदम भी हटते ॥ ८४ ॥

भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाऽऽखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
लोकाः! पश्यत दैवमेव हि नृणां वृद्धौ क्षये कारणम् ॥८५॥

अन्वयः—लोकाः ! पश्यत, आखुः नक्तं विवरं कृत्वा भग्नाशस्य करण्ड-
पिण्डिततनोः क्षुधाम्लानेन्द्रियस्य भोगिनः मुखे स्वयं निपतितः, असौ तत्पिशि-
तेन तृप्तः ( सन् ) तेन एव पथा सत्वरं यातः ( अतः ) हि दैवम् एव नृणां वृद्धौ
क्षये ( च ) कारणं ( भवति )।

व्याख्या—भग्नाशस्येति । हे लोकाः ! = हे मनुष्याः ! पश्यत = विलोकयत
जानीत, आखुः = मूषकः 'उन्दुरुर्मूषकोऽप्याखु' रित्यमरः नक्तम् = रात्रौ,
विवरम् = ( सर्पाधारभूते करण्डे ) छिद्रम्, 'विवरं विलम् छिद्रं निर्व्यथन'–
मित्यमरः, कृत्वा = विधाय, भग्नाशस्य = भोज्यप्राप्तौ निराशस्य, करण्डपिण्डि-
ततनोः, करण्डे = वंशादिकृते सर्पादिजन्तुवर्गादिस्थानोचिते भाण्डभेदे पिण्डिता-
ङ्गप्रसारपर्याप्तावकाशाभावेन पिण्डीभूता सङ्कुचितेति यावत्, तनुः =
शरीरं यस्य तथाभूतस्य, 'शरीरं वर्ष्म विग्रहः, कायो देहः क्लीबपुंसोः स्त्रियां
मूर्तिस्तनुस्तनू', रित्यमरः, क्षुधा = बुभुक्षया करणेन, म्लानेन्द्रियस्य, म्लानानि =
शक्तिहीनानि इन्द्रियाणि = भोगसाधनानि चक्षुरादीनि करणानि यस्य तादृशस्य
भोगिनः = सर्पस्य, 'उरगःपन्नगो भोगी'ति सर्पपर्यायेष्वमरः, मुखे = वदने,
स्वयम् = स्वतः दैवप्रेरितोऽनुक्त एवेत्यर्थः, निपतितः = प्रविष्टोऽभूत्, असौ =
सर्पः, तत्पिशितेन = मूषकमांसेन, 'पिशितं तरलं मांस' मित्यमरः, तृप्तः =
कथमपि तृप्तिं गतः सन् तेनैव = मूषकविहितच्छिद्ररूपेणैव, पथा = मार्गेण,
यातः = यथोद्देशं गतः । अतः हि = निःसन्देहम्, दैवमेव = आत्मनः पुरा कृतं
कर्मैव शुभाशुभरूपम् । नृणाम् = मनुष्याणाम्, वृद्धौ = उन्नतौ लाभस्वरूपे सुखे,
क्षये = अवनतौ हानिस्वरूपे दुःखे च, कारणम् = हेतुः भवति, 'हेतुर्ना कारण'
मित्यमरः । शार्दूलविक्रीडितं वृत्तम् ।

भावार्थः— 'सर्पग्राहिणः करण्डे स्थितः कोऽपि सर्पस्तत्र सर्वतोऽवरुद्धचेष्टः
कष्टमनुभवन्नेव सहसाऽन्तःप्रविष्टं मूषकं कवलीकृत्य मूषकागमनमार्गादेव
बहिर्निर्गतः कष्टान्मुक्तोऽभू' दित्युदाहरणेन सिद्धं–'कार्यस्य सिद्धेरसिद्धेश्च निदानं
दैवमेवे'ति । करण्डेऽवरुद्धस्य सर्पस्य भोज्यलाभो मूषकस्य भोज्यलाभाशया
करण्डान्तर्गतस्य सर्पमुखान्तः पातश्च तदानीमतर्कित एवोपनत इत्येतन्नियतं
काकतालीयन्यायेन दैवस्यैव चेष्टितमिति ।



भाषा—निराश; पिटारी में दबे शरीरवाले तथा भूख के मारे शिथिल

शरीर वाले साँप के मुँह से चूहा स्वयं (पिटारी में) छेद करके चला गया। साँप उसके माँस से तृप्त होकर शीघ्र उसी (छेद के) रास्ते बाहर नि गया। ऐ मनुष्यो ? देखो, भाग्य ही मनुष्य की बढ़ती और नाश का का होता है ।।८५।।

'मनुष्येण दैववादिनाऽलसेन केवलं न स्थातव्यम्, किन्तु सुखप्राप्त्यर्थं मुद्यो करणीय एवे'त्याह—

आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ।
नास्त्युद्यमसमो बन्धुः कुर्वाणो नावसीदति ॥ ८६ ॥

अन्वयः—हि, आलस्यं मनुष्याणां शरीरस्थः महान् रिपुः (अस्ति उद्यमसमः (अन्यः) बन्धुः न अस्ति कुर्वाणः न अवसीदति ।

व्याख्या—आलस्यमिति । हि = निश्चयेन, आलस्यम् = कार्येषु प्रवृत्त्यभ नृणाम् = नराणाम्, शरीरस्थः = देहे स्थितः, महान् = बृहत्, अक्षुद्रो गुरु यावत्, रिपुः = शत्रुः अस्ति, उद्यमसमः = उद्योगेन सदृशः, अन्यः बन्धु स्वीयो बान्धवः नास्ति, कुर्वाणः = उद्योगं कुर्वन् मनुष्यः, नावसीदति = क प्राप्नोति । अनुष्टुप् वृत्तम् ।

भावार्थः—कार्यविघातकं शत्रुमिवालस्यं दूरीकृत्य कार्यसाधकं मित्रमिवो गं स्वीकुर्यान्मनुष्यः । किमपि कार्यं कुर्वतश्च नूनं तत्सिद्धेराशा, अकुर्व तस्याः सिद्धेः प्रसक्तिरेव नास्तीति ।

भाषा—आलस्य (अकर्मण्यता) मनुष्यों का इनके शरीर में ही रहनेवा भारी शत्रु है । उद्यम (पुरुषार्थ) के समान कोई मित्र नहीं है, जिसे करते मनुष्य दुःख नहीं पाता ॥ ८६ ॥

दुःखादनन्तरं सुखं लभ्यत एवे'त्येतदुदाहरणेन स्फुटीकरोति—

छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः ।
इति विमृशन्तः सन्तः सन्तप्यन्ते न दुःखेषु ॥ ८७ ॥

अन्वयः—छिन्नः अपि तरुः पुनः रोहति, क्षीणः अपि चन्द्रः पुनः उपचीय इति विमृशन्तः सन्तः दुःखेषु न सन्तप्यन्ते ।

व्याख्या—छिन्नोऽपीति । छिन्नोऽपि = हृतोऽपि, तरुः = वृक्षः, पुनः = भू रोहति = प्रादुर्भवति, क्षीणोऽपि = कृष्णपक्षे कृशत्वं गतोऽपि,

न्द्रमाः, पुनः = भूयः उपचीयते = शुक्लपक्षे वर्धते, इति = इत्थम्, विमृशन्तः = विचारयन्तः, सन्तः = सत्पुरुषाः दुःखेषु = कष्टेषु विपत्काले इत्यर्थः, न सन्तप्यन्ते = न्तप्ता न भवन्ति, दुःखं व्याकुलताञ्च नाधिगच्छन्तीति । आर्या वृत्तम् ।

भावार्थः—छिन्नस्य तरोः पुनः प्रादुर्भावः क्षीणस्य चन्द्रमसश्च वृद्धिरिव दुःखसन्तप्तानां सुखप्राप्तिः, पुनर्निश्चितैवेति नान्तर्व्याकुलैर्भवितव्यं विपत्तौ सज्जनैरिति ।

भाषा—कट जाने पर भी पेड़ पनपता है तथा क्षीण होने पर ( घट जाने पर ) भी चन्द्रमा बढ़ता है, इस प्रकार विचार करने वाले सज्जन विपत्ति में दुःखी नहीं होते ॥ ८६ ॥

सोदाहरणप्रदर्शनं दैवप्राधान्यं वर्णयति—

नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनुग्रहः किल हरेरैरावतो वारणः ।
इत्यैश्वर्यबलान्वितोऽपि बलभिद् भग्नः परैः सङ्गरे
तद् व्यक्तं ननु दैवमेव शरणं धिग् धिग् वृथा पौरुषम् ॥८८॥

अन्वयः—यस्य नेता बृहस्पतिः, प्रहरणं वज्रम्, सैनिकाः सुराः, दुर्गं स्वर्गः अनुग्रहः हरेः, वारणः ऐरावतः किल इति ऐश्वर्यबलान्वितः अपि बलभित् सङ्गरे परैः भग्नः । तत् व्यक्तम्, ननु दैवम् एव शरणम्, वृथा पौरुषं धिक् धिक् (अस्ति)।

व्याख्या—नेतेति । यस्य = बलभिदः ( इन्द्रस्य ), नेता = नायकः, शिक्षको मार्गदर्शक इति यावत्, बृहस्पतिः = देवगुरुः, प्रहरणम् = शस्त्रम्, 'आयुधं तु प्रहरणं शस्त्र' मित्यमरः, वज्रम् = कुलिशम्, 'वज्रमस्त्री स्यात्कुलिश' मित्यमरः, सैनिकाः = सेनायां समवेता योद्धारः, सुराः = देवाः, दुर्गम् = परैरगम्यं सुगुप्तं रक्षास्थानम्, स्वर्गः = नाकः, 'स्वरव्ययं स्वर्गनाक' इत्यमरः, अनुग्रह = विपत्तेरुद्धर्तुमिच्छा, हरेः = विष्णोर्भगवतः, वारणः = गजः, 'गजो नागः कुञ्जरो वारण' इत्यमरः, ऐरावतः = तन्नामा दिव्यो गजेन्द्रः, किलेति प्रसिद्धौ—इति = अनेन प्रकारेण, ऐश्वर्यबलान्वितोऽपि, ऐश्वर्यम् = बृहस्पतिनेतृत्वादिरूपं वैभवं, बलम् = शक्तिश्च ताभ्याम् अन्वितोऽपि = युक्तोऽपि, 'आश्चर्यबलान्वितोपी'ति पाठे आश्चर्यम् = आश्चर्यकारि बलम् = शक्तिः तद्युक्तोऽपीत्यर्थः कार्यः, बलभित्, बल-

नामकमसुरं भिनत्ति = नाशयतीति तादृशः इन्द्रः, सङ्गरे = आजौ युद्धे यावत्, 'प्रतिज्ञाऽऽजिसंविदापत्सु सङ्गरः' इत्यमरः, परैः = शत्रुभिः, भग्नः पराजितः। तत् = तस्मात् पूर्वोक्तेनोदाहरणेनेत्यर्थः, व्यक्तम् = स्पष्टम् ( यः ननु = निश्चयेन, दैवमेव = भाग्यमेव, शरणम् = रक्षकम् 'शरणं गृहरक्षि रित्यमरः, वृथा = निरर्थकम् भाग्यसाहाय्यं विना निष्फलमिति यावत्, पौरुष पुरुषकारम् उद्योगम्, धिक् धिक्=पुनः पुनर्धिकारोऽस्तु । धिक्शब्दयोगे पौरुषं द्वितीया 'धिगुपर्यादिषु' 'त्रिषु' इति सिद्धान्तानुसारेण बोद्धव्या शार्दूलविक्री वृत्तम् ।

भावार्थः—नेतारं गुरुं तथा सैनिकान् सुरानपि लब्ध्वा दुर्गमे स्वर्गे सि श्रीविष्णोरनुग्रहास्पदं गजेन्द्रारूढो वज्रायुधोऽपीन्द्रः पुरा यत् पराभवं प्राप्त युद्धे, तदुदाहरणं पुरस्कृत्य स्फुटं वेदितव्यम्, यत्किलदैवे सहायके सत्येव पुरुषा मुद्योगः सफलो भवति नान्यथेति ।

भाषा—स्वयं ( देवगुरु ) बृहस्पति जिसके पदप्रदर्शक हैं, वज्र जि अस्त्र है, देवगण जिसके सिपाही हैं, स्वर्गलोक जिसका किला है, अनुग्रह जिस श्रीविष्णु भगवान् का है, ऐरावत जिसका हाथी है–ऐसे ऐश्वर्य तथा शक्ति से इन्द्र भी जो युद्ध में शत्रुओं से हार गया तो यह स्पष्ट है कि--दैव ही केवल र है, निरर्थक पौरुष को बार-बार धिक्कार है ॥ ८८ ॥

'विचारपूर्वकमेव कार्यं कर्तव्य'मिति शिक्षयन्नाह—

कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी ।
तथाऽपि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ ८९ ॥

अन्वयः—( यद्यपि ) पुंसां फलं कर्मायत्तं ( तथा ) बुद्धिः कर्मानुसारि (भवति) तथापि सुधिया सुविचार्य एव कुर्वता भाव्यम् ।

व्याख्या–कर्मायत्तमिति । यद्यपि पुंसाम्=पुरुषाणाम्,फलम्=सुखदुःखादिक कर्मायत्तम्, कर्मणः=आत्मना कृतस्य पापपुण्यात्मकस्य कार्यविशेषस्य आयत्त अधीनम्, 'अधीनो निघ्न आयत्त' इत्यमरः, तथा बुद्धिः = मतिः, कर्मानुसारिणी कृतस्य कर्मणोऽनुरूपा भवति, तथापि = एवं स्थिते सत्यपि, सुधिया = बुद्धि 'सन् सुधीः कोविदो बुधः' इत्यमरः, सुविचार्यैव = सुन्दरं विचारं कृत्यैव, कुर्वता कार्यकारिणा, भाव्यम् = भवितव्यम् । अनुष्टुब् वृत्तम् ।

भावार्थः—फलस्य बुद्धेश्च नियतं कर्माधीनतया तत्कर्मविरुद्धं किमपि कर्तुमसमर्थोऽपि दुष्परिणामभयेन सर्वं सावधानबुद्धया विचार्यैव नरः कार्यं कुर्यादिति।

भाषा—( यद्यपि ) मनुष्यों की ( सुख-दुःख की ) प्राप्ति ( पूर्वकृत ) कर्म के अधीन है और बुद्धि ( भी ) कर्म के अनुसार ही चलती है, फिर भी बुद्धिमान् को विचारपूर्वक ही काम करने वाला होना चाहिए ॥ ८९ ॥

'सर्वत्रैव भाग्यहीनं पुरुषं विपत्तयोऽनुगच्छन्ती'त्याह—

खल्वाटो दिवसेश्वरस्य किरणैः सन्ताडितो मस्तके
वाञ्छन् देशमनातपं विधिवशात्तालस्य मूलं गतः।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥ ९० ॥

अन्वयः—खल्वाटः दिवसेश्वर किरणैः मस्तके सन्ताडितः सन् अनातपं देशं वाञ्छन् विधिवशात् तालस्य मूलं गतः, तत्र अपि पतता महाफलेन अस्य शिरः सशब्दं यथा स्यात्तथा भग्नम्। प्रायः भाग्यरहितः यत्र गच्छति तत्र एव आपदः यान्ति।

व्याख्या—खल्वाट इति। खल्वाटः = केशविहीनमस्तकः पुरुषः, दिवसेश्वरस्य = सूर्यस्य, किरणैः = करैः, मस्तके = शिरसि, सन्ताडितः = आहतः सन्, अनातपम् = सूर्यातपरहितम्, देशम् = प्रदेशं स्थानम्, वाञ्छन् = इच्छन्, अन्विष्यन्निति यावत्, विधिवशात् = भाग्यवशात्, तालस्य = तन्नामकस्य वृक्षस्य, मूलम् = अधःप्रदेशम्, गतः = प्राप्तोऽभूत्, तत्रापि = तस्मिन्नपि प्रदेशे पतता = वृक्षाद् भ्रश्यता, महाफलेन = बृहत्परिमाणेन तत्फलेन, अस्य = खल्वाटस्य शिरः = मस्तकम्, सशब्दम् = 'पटत्पट'दिति शब्देन सहितं यथा स्यात्तथा, भग्नम् = विदीर्णम्। प्रायः = बाहुल्येन भाग्यरहितः = दुर्दैवहतः पुरुषः, यत्र = यस्मिन् स्थले, गच्छति = उपस्थितो भवति, तत्रैव = तस्मिन्नेव स्थले, आपदः = आपत्तयः यान्ति = उपस्थिता भवन्ति। शार्दूलविक्रीडितं वृत्तम्।

भावार्थः—'केशहीने शिरसि सूर्यकरप्रहारपीडामनुभूय सच्छायं प्रदेशं निर्बाधमन्विष्यन् कोऽपि दुर्दैवहतस्तालवृक्षान्तिकमापतितः शिरसि भूयोऽपि तत्फलपतनात् भृशं पीडितोऽभू'दित्यनेन व्यक्तं—दुर्दैवदोषेण पीडितान्नरान् विपत्तयोऽपि वारं वारं पीडयन्तीति।

भाषा—सिर पर पड़नेवाली किरणों से परेशान होकर गञ्जा धूप से खाली जगह ढूंढ़ता हुआ संयोग से ताड़ के नीचे आ पहुँचा । वहाँ भी एक बड़े फल के गिरने से उसका सिर आवाज के साथ फट गया । ( ठीक है ) भाग्यहीन मनुष्य जहाँ जाता है बहुधा वहीं विपत्तियाँ भी जाती हैं ॥ ९० ॥

दैवस्य बलवत्त्वं प्रतिपादयति—

रविनिशाकरयोर्ग्रहपीडनं गजभुजङ्गमयोरपि बन्धनम् ।
मतिमतां च विलोक्य दरिद्रतां विधिरहो ! बलवानिति मे मतिः ॥९१॥

अन्वयः—रविनिशाकरयोः ग्रहपीडनं गजभुजङ्गमयोः अपि बन्धनं मतिमतां च दरिद्रतां विलोक्य 'अहो ! विधिः बलवान्' इति मे मतिः ( भवति ) ।

व्याख्या—रविनिशाकरयोरिति । रविनिशाकरयोः, रविः = सूर्यः निशाकरः = चन्द्रः तयोः, ग्रहपीडनम्, ग्रहेण = राहुनाम्ना ग्रहविशेषेण, पीडनम् = व्यथाकरणं ग्रसनमिति यावत्, गजभुजङ्गमयोरपि, गजः = हस्ती, भुजङ्गमः = सर्पः तयोरपि, बन्धनम् = नियमनम्, मतिमतां च = बुद्धिमतां च, दरिद्रताम् = निर्धनत्वम्, विलोक्य = दृष्ट्वा, अहो = आश्चर्यम्, विधिः = भाग्यम्, 'भाग्यं स्त्री नियतिर्विधिः' इत्यमरः, बलवान् = शक्तिशाली कर्तुमकर्तुमन्यथा च कर्तुं समर्थ इति यावत्, इति = एवंरूपा, मे = मम भर्तृहरेः, मतिः = बुद्धिः मनो-निश्चयो वा, भवति । द्रुतविलम्बितं वृत्तम् ।

भावार्थः—ग्रहेषु महान्तौ जगति प्रसिद्धौ सूर्यश्चन्द्रश्चेत्युभौ यदराहुर्ग्रसति मत्तो गजो विषधरः सर्पश्च दुर्ग्रहो यत् कस्यापि परतन्त्रतारूपं बन्धनं प्राप्नुतः यच्च युक्तिशास्त्रज्ञा बुद्धिमन्तोऽपि दरिद्रतादुःखमनुभवन्ति, तदिदं विलोक्य मन्येऽहं—'दैवं सर्वतः प्रबल'मिति ।

भाषा—सूर्य और चन्द्रमा का राहु द्वारा पीड़ित होना, हाथी और साँप का भी बँधना तथा बुद्धिमानों की दरिद्रता देखकर मेरा यही विचार होता है कि भाग्य बलवान् है ॥ ९१ ॥

अनुचितं कुर्वतो ब्रह्मणो मूढत्वं दर्शयति—

सृजति तावदशेषगुणाकरं पुरुषरत्नमलङ्करणं भुवः ।
तदपि तत्क्षणभङ्गि करोति चेदहह ! कष्टमपण्डिता विधेः ॥९२॥

अन्वयः—( विधिः ) अशेषगुणाकरं भुवः अलङ्करणं पुरुषरत्नं सृजति यावत् तदपि तत् क्षणभङ्गि चेत् करोति ( तर्हि ) अहह ! विधेः अपण्डितता ( इदं ) कष्टम् ।

व्याख्या—सृजतीति । ब्रह्मा, अशेषगुणाकरम्, अशेषगुणानाम् = सर्वेषां गुणानाम् आकरः = खनिः तम् सर्वगुणोत्पत्तिस्थानमित्यर्थः, भुवः = पृथिव्याः, अलङ्करणम् = भूषणम्, पुरुषरत्नम्, पुरुषेषु = मनुष्येषु रत्नम् = रत्नस्वरूपम् रत्नमिव श्रेष्ठं स्वतेजसा प्रकाशमानमिति यावत्, सृजति = उत्पादयति, यावदिति वाक्यालङ्कारे, तदपि = तथापि किन्तु, तत् = पुरुषरत्नम्, क्षणभङ्गि, क्षणेन = क्षणमात्रेण भङ्गि = भङ्गोऽस्यास्तीति तत् नश्वरम्, अथवा तदपि = तत्पुरुषरत्नमपि तत्क्षणभङ्गि = तस्मिन्नेव क्षणे नाशशीलम्, करोति चेत् = यदि विधत्ते, तर्हि, अहहेतिकष्टसूचकमव्ययम्, विधे = ब्रह्मणः, अपण्डितता = मूर्खत्वम्, कष्टम् = दुःखम् कष्टकरमित्यर्थः । द्रुतविलम्बितं वृत्तम् ।

भावार्थः—गुणवन्तमुत्तमं पुरुषमुत्पाद्य पुनस्तं स्वल्पायुषा योजयितुर्ब्रह्मणः सेयं मूढता अत्यन्तं कष्टमुत्पादयति हृदये । सत्पुरुषोत्पादनप्रयासस्तस्य नूनं व्यर्थं एवेति ।

भाषा—ओह ! बड़े दुःख की बात है । यह ब्रह्मा की कैसी मूर्खता है कि पहले तो सारे गुणों की खान तथा पृथ्वी के भूषण नररत्न को पैदा करता है और फिर उसी को क्षणभंगुर ( जरा-सी देर में नष्ट हो जाने वाला ) बना देता है ॥ ९२ ॥

'ललाटलिखितं तावन्न कदाप्यन्यथा भवती'त्युदाहरणैः प्रपञ्चयति—

पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं ?
नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ?
धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं
यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ? ॥९३॥

अन्वयः—यदा करीरविटपे पत्रं नैव ( भवति तर्हि अयं ) वसन्तस्य दोषः किम्, यदि उलूकः दिवा अपि न अवलोकते ( तर्हि इदं ) सूर्यस्य दूषणं किम् ( यदि ) चातकमुखे धाराः न एव पतन्ति ( तर्हि इदं ) मेघस्य दूषणं किम् । ( हि ) विधिना पूर्वं यत् ललाटलिखितम्, तत् मार्जितुं कः क्षमः ? ।

व्याख्या--पत्रमिति । यदा = यदीत्यर्थः, करीरविटपे = करीरनामकवृक्ष शाखायाम्, पत्रम् = पर्णम् 'पत्रं पलाशं छदनं दलं पर्ण'मित्यमरः, नैव = कदापि भवति, तर्हि अयम्, वसन्तस्य = वसन्तर्तोः मधुमासस्य, दोषः = अ राधः किम् ? नास्तीत्यर्थः, यदि = चेत्, उलूकः = दिवान्धः पक्षी, दिवाऽपि दिनेऽपि, नावलोकते = न पश्यति, तर्हि इदम्, सूर्यस्य = रवेः, दूषणम् = दो किम् ? न किमपीत्यर्थः, यदि चातकमुखे = सारङ्गनाम्नः पक्षिणो वदने, धाराः मेघमुक्ता जलधाराः नैव पतन्ति = निश्चितरूपेण न पतन्ति, तर्हि इदम्, मे स्य = जलदस्य, दूषणम् = दोषः किम् ? नास्त्येवेत्यर्थः । युक्तमेवेदम्, विधिना विधात्रा, पूर्वम् = जन्मकाले यत् ललाटलिखितम् = भालेऽक्षररूपेण विन्यस्त समासोऽत्र विचारणीयः, तत्, मार्जितुम् = प्रोञ्छितुम्, कः = को नाम पुरु क्षमः = समर्थः ? न कोऽपीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

भावार्थः—विधेर्लिखितमन्यथाकर्तुं न केनापि शक्यम् । पत्रपुष्पफला समृद्धिकरेऽपि वसन्तसमये करीरतरोः पत्रहीनताः, दिवसेऽप्यूलकपक्षिणि द शक्तेरभावः, वर्षास्वपि चातकमुखे जलविन्दोरप्राप्तिश्चेति सर्वं विधिलिखित परिणमति, न किलात्र वसन्तसूर्यमेघानां दोषस्य लेशोऽपीति ।

भाषा—यदि करीर के पेड़ में पत्ता नहीं आता तो वसन्त का क्या दोष यदि उल्लू दिन में भी नहीं देख पाता तो सूर्य का क्या दोष ? यदि चातक मुंह में वर्षा की बूंदों की धारा नहीं पड़ती तो बादल का क्या दोष ? ब्रह्मा जो कुछ ललाट की पटिया पर अर्थात् भाग्य में लिख दिया है उसे कौन मि सकता है ।। ९३ ।।

कर्मणो महिमानं दर्शयति—

नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगा
　　विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ।
फलं कर्मायत्तं यदि किममरैः किञ्च विधिना ?
　　नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ।। ९४ ।।

अन्वयः—( वयम् ) देवान् नमस्यामः, ( किन्तु ) ते अपि हतविधेः वशगाः ( सन्ति, अतः ) विधिः, वन्द्यः किन्तु सः अपि प्रतिनियतकर्मैकफल (अस्ति तथा च), यदि फलं कर्मायत्तं ( तर्हि ) अमरैः किम् विधिना च कि

तत् कर्मभ्यः नमः ( अस्तु ), विधिः अपि येभ्यः न प्रभवति ।

व्याख्या—नमस्याम । इति । वयम्, देवान्=इन्द्रादीन् सुरान्, नमस्यामः=पूजयामः, नमस्कुर्म इत्यर्थः, 'नमोवरिवश्चित्रङ क्यच्' इत्यनेन नमोऽव्ययात् पूजार्थे क्यच् प्रत्ययः, 'पूजा नमस्याऽपचिति'रित्यमरः, ननु=निश्चयेन, तेऽपि=देवा अपि, हतविधेः=नीचस्य ब्रह्मणः दैवस्य वा, स्वतन्त्राणामीश्वराणां, देवानां स्वातन्त्र्यमपहृत्य तान् स्ववशगान् कर्तुर्विधेर्हतत्वं (नीचत्वं) स्फुटमेव, वशगाः=वशङ्गता अधीनाः सन्ति, अतो हेतोः विधिः=ब्रह्मा दैव वा, वन्द्यः=नमस्कार्यः, किन्तु सोऽपि=विधिरपि, प्रतिनियतकर्मैकफलदः, प्रतिनियतम्=तत्तत्पुण्यपापरूपेण निश्चितं यत् कर्म=विधिविशेषः, तदेकस्य=केवलं तस्यैव फलम्=सिद्धि ददातीति तादृशः, यद्वा प्रतिनियतं यत् कर्मण एकम्=मुख्यं केवलं वा फलं तम् ददातीति तथाभूतः, शुभाशुभकर्मानुसारिफलदातेत्यर्थः अस्ति, तथा च यदि = चेत्, फलम् = सिद्धिः, कर्माधीनम् = स्वकृतकर्मानुसारि तर्हि अमरैः=देवैः, किम्=किं प्रयोजनम् ? विधिना च=ब्रह्मणा दैवेन वा च, किम्=किं प्रयोजनम् । कर्मविरुद्धफलदानाऽसामर्थ्यान्न किमपि प्रयोजनमित्यर्थः, तत्=तस्मात् कारणात्, कर्मभ्यः=कार्यविशेषेभ्यः पुरुषप्रयत्नरूपेभ्यः, नमः=नमस्कारोऽस्तु, विधिरपि=ब्रह्मा दैवं वापि, येभ्यः=कर्मभ्यः, 'नमः स्वस्ती'-त्यादिना पर्याप्तिवाचकाऽलंशब्दयोगे चतुर्थी, न प्रभवति=न समर्थो भवति । कर्मणां पुरो विधेरपि शक्तिः कुण्ठिता भवतीत्यर्थः । शिखरिणी वृत्तम् ।

भावार्थः—परमेश्वरेषु देवेष्वपि यस्याऽखण्डितं प्रभुत्वं वर्तते सोऽपि विधिर्न तावदस्माकं वन्दनीयो भवति, यतः स नूनं तत्तत्कर्मानुसार्येव सर्वेभ्यः फलं दत्ते । अतो वयं देवान् विधिं चोपेक्ष्य तेषां कर्मणामेव पुरः शिरो नमस्यामो विधिरपि येषां वशंवद एवेति ।

भाषा- मैं देवताओं को नमस्कार करता हूँ, पर वे भी तो दुष्ट विधि के वश में हैं । अच्छा तो उस विधि की ही वन्दना करनी चाहिए । पर वह भी तो निश्चित कर्म का ही फल देता है, और फल कर्म के अधीन है । तो फिर देवताओं तथा विधि से कुछ लाभ नहीं । बस उन्हीं कर्मों को नमस्कार हो जिन पर विधि का भी वश नहीं चलता है ॥ ९४ ॥

पुनरपि कर्मणो महिमानं प्रायन्तराहरणैस्तं विशदीकरोति—

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ ९५ ॥

अन्वयः—येन ब्रह्मा ब्रह्माण्डभाण्डोदरे कुलालवत् नियमितः, येन विष्णु दशावतारगहने महासङ्कटे क्षिप्तः, येन रुद्रः कपालपाणिपुटके भिक्षाटनं कारित (येन नियमितः) सूर्यः नित्यमेव गगने भ्राम्यति, तस्मै कर्मणे नमः (अस्तु)।

व्याख्या—ब्रह्मेति। येन=कर्मणा, ब्रह्मा=सृष्टिकर्ता ब्रह्मादेवः, ब्रह्माण्ड भाण्डोदरे, ब्रह्माण्डम् = सकलं जगदेव भाण्डम् = पात्रं तस्य उदरे = मध्ये तन्निर्माणविधावित्यर्थः, कुलालवत् = कुम्भकार इव, 'कुम्भकारः कुलालः स्या दित्यमरः, नियमितः=नियोजित, येन कर्मणा, विष्णुः=पुराणपुरुषो नाराय दशावतारगहने, दशावताराः = मत्स्यकूर्मादिदशावतारग्रहणमित्यर्थः, तद्रू गहने=दुर्गमे भयङ्करे, महासङ्कटे=महति कष्टे अतिकष्टकरे कार्ये वा, दशावतार ग्रहणरूपे गहने महति कष्टे इत्यर्थः। क्षिप्तः = पातितः प्रेरितो वा, 'महासङ्कटे दशावतारगहने' इति वा योज्यम्, तत्र = महासङ्कटे कृच्छ्रतरे, अतिकष्टक इति यावत्, दशावतारगहने = दशावतारस्वरूपे, गहने = वने, 'गहनं कानन वन' मित्यमरः। इत्यर्थो विधेयः, येन = कर्मणा, रुद्रः = महेश्वरः शङ्करः कपालपाणिपुटके, कपालम् = ब्रह्मशिरः, तदेव पाणिपुटकम् पुटरूपतां प्रापित हस्तः तत्र, यद्वा कपालयुक्तं यत्पाणिपुटकं तत्र, मध्यमपदलोपी समासः भिक्षाटनम् भिक्षायै भिक्षाप्राप्त्यर्थम् अटनम् = भ्रमणम् तत् कारितः = विधापितः, भिक्षापदस्य पाणिपुटकपदेन सम्बन्धात् 'भिक्षाटन' मित्येष समासो नोचितः, येन = कर्मणा, नियमितः = प्रेरितः, इत्येवमत्रापि योज्यम्, सूर्यः नित्यमेव=अश्रान्तमेव, गगने=आकाशे, भ्राम्यति = भ्रमणं करोति, तस्मै = महामहिमशालिने, कर्मणे = तत्तत्कार्यविशेषरूपाय, नमोऽस्तु। शार्दूलविक्रीडित वृत्तम्।

भावार्थः—ब्रह्माणं जगन्निर्माणे, विष्णुं दशावतारचरितप्रदर्शने, श भिक्षाचरणे, सूर्यञ्च पृथ्वीपरिक्रमणे प्रवर्तयत्कर्मैव सर्वतो बलवत्तमं सर्वै नमस्कारार्हमिति।

भाषा—जिसने विश्वरूपी बर्तन के भीतर ब्रह्मा को कुम्हार की भाँति (जगत् की रचना के लिए) नियुक्त कर दिया तथा विष्णु को अत्यन्त दुःखदायक ( मत्स्य, कच्छप आदि ) दशावतार धारण करने की कठिनाई में डाल दिया, जिसके मारे शङ्करजी हाथ में खप्पर लेकर भीख माँगते फिरते हैं और सूर्य प्रतिदिन आकाश में घूमा करता है, उस कर्म को नमस्कार हो ॥ ९५ ॥

'भाग्यमेव समयानुसारं फलं दातुं प्रभवती'ति प्रतिपादयति—

नैवाकृतिः फलति नैव कुलं न शीलं
विद्यापि नैव न च यत्नकृतापि सेवा।
भाग्यानि पूर्वतपसा खलु सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ९६ ॥

अन्वयः—आकृतिः न एव फलति, कुलं न एव फलति, शीलं न फलति, विद्या अपि न एव फलति, च यत्नकृता सेवा अपि न फलति, पूर्वतपसा सञ्चितानि पुरुषस्य भाग्यानि खलु काले फलन्ति, यथा वृक्षाः (काले) एव फलन्ति ।

व्याख्या—नैवाकृतिरिति । आकृतिः = आकारः सुन्दरं स्वरूपमिति यावत्, नैव फलति = निश्चयेन फलदा न भवति, कुलम् = निर्मलो वंशः, नैव फलति, शीलम् = सदाचरणम्, न फलति, विद्यापि = वेदशास्त्रादिज्ञानमपि, नैव फलति, च = किञ्च, यत्नकृता = प्रयत्नेन विहिता । सेवापि = राजादेः परिचर्यापि, न फलति, पूर्वतपसा, पूर्वम् = पुरा कृतं यत्तपः = सुकृतं तेन सञ्चितानि = अर्जितानि = सम्पादितानि, पुरुषस्य = मनुष्यस्य, भाग्यानि = दैवानि, खलुः = निःसंशयम्, काले = समये परिपाकदशायाम् फलन्ति = फलप्रदानि भवन्ति, यथा = यादृक्, वृक्षाः = पादपाः, काले एव = तदुचिते समये एव, फलन्ति = फलयुक्ता जायन्ते । वसन्ततिलका वृत्तम् ।

भावार्थः—आकृत्यादिकं किमपि नैव सम्मानादिकं जगति प्रयच्छति, केवलं पूर्वसुकृतानुसारं परिणमद् भाग्यमेव किमपि सत्फलं दातुं वृक्षवत् समये प्रभवतीति सुकृतैः कर्मभिर्भाग्यमेव स्वाभिलाषानुरूपं सम्पादयितुं पुरुषैः प्रयतनीयमिति ।

भाषा—पुरुष का न तो (सुन्दर) आकार फल देता है, न (ऊँचा) खानदान, न सदाचार, न विद्या और न परिश्रम के साथ की गई सेवा, प्रत्युत पहले ( पूर्व जन्म में ) किये गये तप के द्वारा अर्जित किया हुआ भाग्य ही उचित अवसर

पर वृक्ष की भाँति फल देता है ॥ ९६ ॥

'पुरातनं पुण्यमेव पुरुषाणां सर्वत्र संरक्षकं भवती'त्याह—

वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा ।
सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुरा कृतानि ॥९७॥

अन्वयः——पुरा कृतानि पुण्यानि वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा सुप्तं प्रमत्तं विषमस्थितं वा (पुरुषं) रक्षन्ति ।

व्याख्या——वन इति । पुरा=पूर्वम्, कृतानि=सम्पादितानि, पुण्यानि=सत्कर्माणि, वने = अरण्ये, रणे = युद्धे, शत्रुजलाग्निमध्ये, शत्रवः = रिपवः जलम्=सलिलम्, अग्निः=वह्निश्चेति तेषां मध्ये=अन्तरे, महार्णवे=महति भीषणाकारे सागरे, 'सरस्वान् सागरोऽर्णव' इत्यमरः, पर्वतमस्तके=वा शैलस्य शिखरे वा, सुप्तम्=निद्रितम्, प्रमत्तम्=असावधानम्, विषमस्थितं वा विषमे=निम्नोन्नतस्थले विपत्तौ च, स्थितं वा=विद्यमानं वा, रक्षन्ति = पालयन्ति, तत्सहायतां कुर्वन्तीत्यर्थः । उपजातिर्वृत्तम् ।

भावार्थः—वनादिषु भीषणेषु स्थानेषु स्वप्नादिमोहमयावस्थायाञ्च जीवन-संरक्षणाशा पुरुषाणां पूर्वपुण्यैर्विना न काऽप्यन्यतोऽस्तीति ।

भाषा——वन में, युद्ध में, शत्रु, जल तथा आग के बीच, महासमुद्र में, पर्वत की चोटी पर, सुप्तावस्था में असावधानी की हालत में तथा सङ्कट पड़ने पर पहले के किये गये पुण्य ही ( पुरुष की ) रक्षा करते हैं ॥ ९७ ॥

महत्त्वं प्रदर्शयन् सत्कर्मणः करणीयतां निरूपयति—

या साधूंश्च खलान् करोति विदुषो मूर्खान् हितान् द्वेषिणः
प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् ।
तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं
हे साधो ! व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः ॥९८॥

अन्वयः—या खलान् साधून् करोति, मूर्खान् विदुषः करोति, च द्वेषिणः हितान् करोति, परोक्षं प्रत्यक्षं कुरुते, हालाहलं तत्क्षणात् अमृतं कुरुते, हे साधो वाञ्छितं फलं भोक्तुं तां भगवतीं सत्क्रियाम् आराधय, व्यसनैः विपुलेषु गुणेषु वृथा आस्थां मा कृथाः ।

व्याख्या—येति । या = सत्क्रिया, खलान् = दुर्जनान्, साधून् = सज्जनान्

करोति=विदधाति सम्पादयतीति यावत्, मूर्खान्=अज्ञान्, विदुषः=ज्ञानसम्पन्नान् पण्डितानिति यावत्, च=अपि च, द्वेषिणः=हितस्य विरोधं कुर्वतः शत्रून्, हितान्= हितकारिणः, करोति, परोक्षम् = दृष्टेरगोचरं विषयम्; प्रत्यक्षम् = दृष्टिगोचरम्, कुरुते=विधत्ते, हालाहलम्=भयङ्करं विषम्, तत्क्षणात्=झटिति, अमृतम् = मधुरां सुधाम्, कुरुते, हे साधो ! = हे सज्जन् ! वाञ्छितम्=अभीष्टम्, फलम् = कार्यस्य सिद्धिम्, भोक्तुम्=आसादयितुम्, ताम्=पूर्वोक्तगुणशालिनीम्, भगवतीम्=ऐश्वर्यादि-गुणसम्पन्नाम्, सत्क्रियां = सतीं क्रियां शोभनं कर्मेति यावत्, आराधय = सेवस्व, सर्वदाऽनुतिष्ठेत्यर्थः, व्यसनैः=भ्रंशैः नाशैरिति यावत्, विपद्भिर्वा, 'व्यसनं विपदि भ्रंशे' इत्यमरः, विपुलेषु = विस्तृतेषु, नाशविपत्तिभूयिष्ठेष्विति यावत्, गुणेषु = विद्वत्तादिषु सत्त्वरजस्तमोरूपेषु वा, वृथा =व्यर्थम्, आस्थाम्=यत्नम्, गुणार्जन-प्रयत्नमित्यर्थः, 'आस्थानीयत्नयोरास्था' इत्यमरः, मा कृथाः=न कुरु। यद्वा— 'विपुलेषु गुणेषु व्यसनैः आस्थां वृथा मा कृथा' इत्यन्वयः, अयमर्थः—विपुलेषु= बहुषु विस्तृतेषु तत्र तत्र प्रसिद्धेषु वा, गुणेषु, व्यसनैः=आसक्तिभिः, आस्थाम् = यत्नमित्यादि पूर्ववत् गुणेष्वासक्तिपूर्वकं प्रयत्नं न विधेहीत्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

भावार्थः—नश्वराणां गुणानामर्जने प्रयत्नं निरर्थकमासक्तिपूर्वं गुणार्जन-प्रयासं वा परित्यज्य सज्जनैरभीष्टफलसिद्धिकरमैश्वर्यगुणसम्पन्नं विचित्रगुणशालि सत्कर्मैव सर्वदा सेवनीयमिति।

भाषा—हे सज्जन ! यदि वाञ्छित फल भोगना चाहते हो तो उस ऐश्वर्य-शाली अच्छे कर्म का सेवन करो जो दुष्टों को सज्जन, मूर्खों को विद्वान्, शत्रुओं को मित्र, आँखों से परे की वस्तु को आँखों के सामने तथा विष को तत्काल अमृत कर देता है। बहुत दुःख देनेवाले गुणों ( विद्वत्ताप्रभृति अथवा सत्त्व, रज तथा तम ) में व्यर्थ प्रयत्न न करो ॥ ९८ ॥

'सकलं कार्यं तत्परिणामविचारपुरःसरमेव कर्तव्यं विद्वद्भि'रित्याह—

गुणवदगुणवद्वा कुर्वता कार्यजातं
परिणतिरवधार्या यत्नतः पण्डितेन।
अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ९९ ॥

अन्वयः—गुणवत् वा अगुणवत् कार्यजातं कुर्वता पण्डितेन परिण[ति]
यत्नतः अवधार्या। (हि) अतिरभसकृतानां कर्मणां विपाकः शल्यतुल्यः आविप[त्तेः]
हृदयदाही भवति।

व्याख्या—गुणवदिति। गुणवत् गुणाः सन्त्यस्मिन्निति तत् = गुणयुक्त[म्]
वा अथवा, अगुणवत् गुणवन्न भवतीति तत् = गुणहीनं दोषपूर्णं वा, का[र्य]
जातम् = कर्मणां समूहम्, बहुविधं कर्मेति यावत् 'जातं जनिसमूहयो'रित्यमरः
कुर्वता = अनुतिष्ठता पण्डितेन, पण्डा = बुद्धिः सञ्जाताऽस्येति पण्डितः तेन बु[द्धि]
मतेत्यर्थः, परिणति=उत्तमोऽधमो वा तस्य परिणामः, यत्नतः=प्रयत्नेन, अ[व]
धार्या = विचारणीया, यतः, अतिरभसकृतानाम्, अतिरभसः = रभसः—मूय
वेगः त्वराविशेष इति यावत् तेन, 'रभसो वेगहर्षयो'रित्यमरः, कृतानाम्=
विहितानाम्, कर्मणाम् = कार्याणाम्, विपाकः = परिपाकावस्था, परिणामः फ[ल]
प्राप्तिसमय इति यावत्, शल्यतुल्यः = अन्तःप्रविष्टेन शङ्कुना सदृशः, दुः[ख]
इत्यर्थः, आविपत्तेः = मरणपर्यन्तम्, हृदयदाही, हृदयम् = चेतः दग्धुम् = ज्वलि[तुं]
शीलमस्येति तथाभूतः मनःसन्तापकारीत्यर्थः ताच्छील्ये णिनिः, भवति=
जायते। मालिनी वृत्तम्।

भावार्थः—विदुषा समीचीनं विचार्यैव कार्यं कर्तव्यम्, सहसा विहितं क[र्म]
दुष्परिणामं दुःखदायकमाजीवनं भवतीति।

भाषा—गुणों से युक्त या रहित कार्यों को करनेवाले बुद्धिमान् को विचा[र]
पूर्वक ( उसका ) परिणाम निश्चित कर लेना चाहिए; क्योंकि अतिवेग से कि[ए]
हुए कार्यों का परिणाम मरते समय तक काँटे की भाँति हृदय को जलानेवा[ला]
होता है ॥ ९९ ॥

'सत्कर्मणो विमुखत्वं च मूर्खत्वसूचकमस्ती'त्याह—

स्थाल्यां वैदूर्यमय्यां पचति तिलकणांश्चान्दनैरिन्धनौघैः
सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधामर्कमूलस्य हेतोः।
कृत्वा कर्पूरखण्डान् वृतिमिह कुरुते कोद्रवाणां समन्तात्
प्राप्येमां कर्मभूमिं न चरति मनुजो यस्तपो मन्दभाग्यः ॥१००॥

अन्वयः—यः मन्दभाग्यः मनुजः इमां कर्मभूमिं प्राप्य तपः न चरति, (स)
इह वैदूर्यमय्यां स्थाल्यां चान्दनैः इन्धनौघैः तिलकणान् पचति, अर्कमूलस्य

हेतोः सौवर्णैः लाङ्गलाग्रैः वसुधां विलिखति, कर्पूरखण्डान् कृत्वा समन्तात् कोद्रवाणां वृतिं कुरुते ॥

व्याख्या—स्थाल्यामिति । यः मन्दभाग्यः, मन्दम् = अपटुकार्याऽक्षममिति यावत् अल्पं वा भाग्यम् = दैवम् यस्य सः, 'मूढाल्पाऽपटुनिर्भाग्या मन्दा' इत्यमरः, मनुष्यः, इमाम् = प्रत्यक्षमनुभूयमानाम्, कर्मभूमिम् = कर्मक्षेत्रं मर्त्यलोकम्, प्राप्य = लब्ध्वा, तपः = पुण्यं कर्म, न चरति = न करोति, सः = मनुजः, इह = अस्मिन् लोके, वैदूर्यमय्याम्, विदूरात्प्रभवतीति वैदूर्यः, मणिः, तस्य विकारः वैदूर्यमयी तस्याम्, वैदूर्यमणिनिर्मितायामित्यर्थः, 'विदूराञ्ज्यः, इत्यनेन ञ्यप्रत्यये वैदूर्यशब्दः सिध्यति, तस्मात् 'तस्य विकार' इति विकारार्थे मयट् प्रत्यये टित्त्वाद् ङीपि वैदूर्यमयीति, स्थाल्याम् = पात्रे, चान्दनैः = चन्दनवृक्षसम्बन्धिभिः, इन्धनौघैः = काष्ठसमूहैः 'काष्ठं दार्विन्धनं त्वेध' इत्यमरः, तिलकणान्; तिलस्य तन्नामकस्य वस्तुनः कणाः = अंशाः तान् तिलानिति यावत् 'कणोऽतिसूक्ष्मे धान्यांशे' इत्यमरः, पचति = विक्लेदयति, अर्कमूलस्य अर्कस्य = मन्दारवृक्षस्य मूलम् = मूलभागः तस्य, हेतोः = कारणात्, अर्कमूलप्राप्त्यर्थमित्यर्थः, सौवर्णैः = सुवर्णनिर्मितैः, लांगलाग्रैः = हलस्याग्रभागैः, वसुधाम् = पृथ्वीम्, विलिखति = कर्षति, कर्पूरखण्डान्, कर्पूरस्य, = घनसारस्य, 'घनसारश्चन्द्रसंज्ञ' इति कर्पूरपर्यायेष्वमरः, खण्डान् = शकलानि, 'भित्तं शकलखण्डे वा' इत्यमरः, कृत्वा = विधाय, समन्तात् = सर्वतः, कोद्रवाणाम् = कोरदूषाणाम् अन्नभेदानाम् 'कोरदूषस्तु कोद्रवः' इत्यमरः, वृत्तिम् = आवरणम्, कुरुते = विदधाति । स्रग्धरा वृत्तम् ।

भावार्थः—वैदूर्यमये पात्रे चन्दनकाष्ठैस्तिलानां पाकम्, अर्कमूलप्राप्तये सौवर्णाग्रसुन्दरेण हलेन भूमेः कर्षणं तथा कर्पूरशकलैः समन्ततः कोद्रवाणामावरणमिव कर्मक्षेत्रेऽपि मर्त्यलोकेऽस्मिन् सत्कर्माऽनुष्ठानं मन्दतासूचकमेवेति ।

भाषा—जो मन्दभाग्य (अभागा) पुरुष इस कर्मभूमि ( सत्कर्म करने योग्य मर्त्यलोक) को पाकर पुण्य कर्म नहीं करता, वह वैदूर्यमणि से बनी हुई बटुली में चन्दन के ईंधन से तिल के दानों को पकाता है, आक ( अर्क ) की जड़ को पाने के लिए सोने के फल के अग्रभाग से पृथ्वी को जोतता है तथा कर्पूर के टुकड़े करके कोदों के (खेत के) चारों ओर बाढ़ लगाता है ॥१००॥

"अभाव्यं न भवत्यत्र भाव्यं च भवति ध्रुव'मित्येवं सिद्धान्तयन्नाह—

मज्जत्वम्भसि यातु मेरुशिखर शत्रूञ्जयत्वाहवे
वाणिज्यं कृषिसेवने च सकला विद्याः कलाः शिक्षताम्।
आकाशं विपुलं प्रयातु खगवत् कृत्वा प्रयत्नं परं
नाऽभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ? ॥१०१

अन्वयः—( जनः ) अम्भसि मज्जतु मेरुशिखरं, यातु आहवे शत्रून् जयतु वाणिज्यं कृषिसेवने सकलाः विद्याः कलाः च शिक्षिताम्, परं प्रयत्नं कृत्वा खगवत् विपुलम् आकाशं प्रयातु, ( तथापि ) इह कर्मवशतः अभाव्यं न भवति तथा भाव्यस्य नाशः कुतः ? !

व्याख्या—मज्जत्विति । जनः अम्भसि = जले, मज्जतु = मग्नो भवतु प्राणानवरुध्य कियच्चिरं जलान्तस्तिष्ठत्वित्यर्थः, मेरुशिखरम् = मेरुपर्वतस्याग्र भागम्, यातु = गच्छतु आरोहमिति यावत्, आहवे = युद्धे, शत्रून् = रिपून् जयतु = पराभवपदं नयतु, वाणिज्यम् = वणिजां कर्म क्रयविक्रयादिकम् कृषिसेवने, कृषिः = कर्षणं च सेवनम् = परिचरणं चेति कृषिसेवने ते सकलाः = सर्वाः, विद्याः = वेदवेदाङ्गमीमांसान्यायपुराणधर्मशास्त्ररूपाश्चतुर्दश सङ्ख्याकाः; च = अपि च, सकलाः कलाः = इतिहासाद्याश्चतुः षष्टिसङ्ख्याकाः शिक्षताम् = अभ्यस्यतु, परम् = असाधारणम्, प्रयत्नम् = उद्योगम्, कृत्वा = विधाय, खगवत्=पक्षीव, विपुलम् = विशालम्, आकाशम् = गगनम्, प्रयातु = गच्छतु, तथापि, इह = संसारे, कर्मवशतः = पुण्याऽपुण्यात्मकानां कर्मणामनु रोधेन, अभाव्यम् = भवितुमशक्यम्, असम्भवं, फलम् न भवति तथा, भाव्यस्य = भवितुं शक्यस्य ससम्भवस्य फलस्य, नाशः = अनुपलब्धिः कुतः = कथम् भाव्यं भवत्येवेत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

भावार्थः—जले मज्जनं मेरुशिखरारोहणं शत्रुविजयं वाणिज्यकृषिसेवनं विद्याकलाशिक्षणं गगनाधिरोहणञ्चेति दुष्कराण्यपि कार्याणि कर्तुं चेष्टतां नाम जनः, प्रयत्नानां स्वाधीनत्वात् । किन्तु तत्र फलस्य प्राप्तिरप्राप्तिश्चेत्येष विषयः पुनः कर्माधीन एव, पुरुषयत्नस्य तत्र सर्वथाऽकिञ्चित्करत्वादिति ।

भाषा—मनुष्य पानी के अन्दर जाय, सुमेरु की चोटी पर चढ़ जाय; युद्ध में शत्रुओं को जीते, व्यापार, खेती, सेवा, सारी विद्या तथा कलाओं को सीखे और भारी प्रयत्न करके आकाश में पक्षी की भाँति उड़े, फिर भी संसार में कर्म के प्रताप से अनहोनी बात नहीं होती और होने वाली बात का निवारण (भी) कैसे हो सकता है ? ॥ १०१ ॥

'पुरातनसुकृतवशात् सुखसम्पत्समृद्धिभाजः सर्वमप्यनुकूलं भवति जनस्ये'त्याह—

भीमं वनं भवति तस्य पुरं प्रधानं
सर्वो जनः स्वजनतामुपयाति तस्य ।
कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा
यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ १०२ ॥

अन्वयः—यस्य नरस्य विपुलं पूर्वसुकृतम् अस्ति, तस्य भीमं वनम् ( अपि ) प्रधानं पुरं भवति, तस्य सर्वः ( अपि ) जनः स्वजनताम् उपयाति, ( तस्य ) कृत्स्ना भूः च सन्निधिरत्नपूर्णा भवति ।

व्याख्या:—भीममिति । यस्य नरस्य = यस्य मनुष्यस्य, विपुलम् = बहुलम्, पूर्वसुकृतम् = पुरातनं सत्कर्म, अस्ति = विद्यते, तस्य = तादृशः पूर्वसुकृतशालिनो मनुष्यस्य, भीमम् = भयानकम्, 'घोरं भीमं भयानक' मित्यमरः, वनमपि = अरण्यमपि, प्रधानम् = मुख्यं श्रेष्ठम्, पुरम् = नगरम्, भवति = सञ्जायते, तस्य = तादृशस्य नरस्य, सर्वोऽपि = अशेषोऽपि, जनः = लोकः, स्वजनताम् = स्वात्मीयत्वम्, उपयाति = प्राप्नोति, 'सर्वे जनाः सुजनतामुपयान्ती' तिपाठे 'सकला मनुष्याः सज्जना भवन्ती' त्यर्थः, तस्य तथाभूतस्य, कृत्स्ना = सर्वा, 'समं सर्वम्, 'विश्वमशेषं कृत्स्न' मित्यमरः, भूश्च = पृथिवी च, सन्निधिरत्नपूर्णा, सद्भिः = श्रेष्ठैः निधिभिः = पद्मशङ्खादिनिधिभेदैः सुवर्णादिनिधिभिश्च रत्नैः = हीरकादिमणिभिश्च, पूर्णा = परिपूर्णा, भवति = जायते । वसन्ततिलका वृत्तम् ।

भावार्थः—पूर्वसुकृतोद्रेकेण धन्यः पुरुषो भीषणेऽरण्येऽपि नगरोत्तम इव सकलसुखसामग्रीमुत्पादयितुं प्रभवति, तस्य पुरः सर्वेऽपि लोकाः स्वात्मीयभावं

वा सौजन्यभावं वा प्रकटयन्ति, स किल रत्नादिकं सकलं स्वाभिलाषानु
भूमेरुपलब्धुं शक्नोतीति ।

भाषा—जिस पुरुष का पूर्वजन्मकृत पुण्य प्रबल है उसके लिये भयंकर
(भी) श्रेष्ठ नगर हो जाता है, सब लोग उसके सगे हो जाते हैं तथा सारी पृथ्
उत्तम निधियों और रत्नों से पूर्ण हो जाती है ॥ १०२ ॥

इदानीं लाभादीनां यथार्थं स्वरूपं दर्शयन् कानिचित् प्रश्नोत्तराणि प्रपञ्चयति—

को लाभो गुणिसङ्गमः किमसुखं प्राज्ञेतरैः सङ्गतिः
का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः ।
कः शूरो विजितेन्द्रियः प्रियतमा काऽनुव्रता किं धनं
विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥१०३॥

अन्वय—लाभः कः ? गुणिसङ्गमः, असुखं किम् ? प्राज्ञेतरैः (सह
सङ्गतिः, हानिः का ? समयच्युतिः, निपुणता का ? धर्मतत्त्वे रतिः, शूरः क
विजितेन्द्रियः, प्रियतमा का ? अनुव्रता, धनं किम् ? विद्या, सुखं कि
अप्रवासगमनम्, राज्यं किम् ? आज्ञाफलम् ।

व्याख्या—को लाभः इति । 'लाभः = प्राप्तिः, कः = किन्नामधेयः ?'
प्रश्ने—गुणिसङ्गमः=गुणिनाम्=दयादाक्षिण्यादिसद्गुणशालिनां पुरुषश्रेष्ठ
सङ्गमः = सङ्गतिः' इत्युत्तरम्, 'असुखम = सुखस्याभावः दुःखमिति या
किम् = किन्नामधेयम् ?' इति प्रश्ने—'प्राज्ञेतरः, प्राज्ञेभ्यः = पण्डितेभ्यः इत
अन्ये मूर्खा इति यावत् तैः, सह सङ्गतिः = सङ्गः' इत्युत्तरम्, 'हानिः = क्ष
का = किन्नामधेया ?' इति प्रश्ने—'समयच्युतिः, समयस्य = कालस्य च्युति
वृथायापनम्' इत्युत्तरम्, निपुणता = कुशलता अभिज्ञता, 'प्रवीणे निपुणा
ज्ञविज्ञनिष्णातशिक्षिताः' वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि' इत्यम
का = किन्नामधेया ?' इति प्रश्ने 'धर्मतत्त्वे = धर्मरहस्ये, रतिः = प्रेम' इत्युत्त
'शूरः = वीरः, कः=कीदृशः ?' इति प्रश्ने—'अनुव्रता, अनु=अनुकूलम् अ
पत्युः, व्रतम् = नियमः यस्याः तादृशी' इत्युत्तरम्, 'धनम् = वित्तम्, कि
मधेयम् ?' इति प्रश्ने—'विद्या = ज्ञानम्' इत्युत्तरम्, 'सुखम् = शर्म, कि
किन्नामधेयम् ? इति प्रश्ने 'अप्रवासगमनम्' प्रवासः = परदेशवासः
यत् गमनम् प्रवासगमनं तत् नभवतीति तत् परदेशगमनाभावः इति यावत्'

त्तरम्, 'राज्यम् = आधिपत्यम्, किम् = कीदृशम् ?' इति प्रश्ने—'आज्ञाफलम्' आज्ञाया: = आदेशस्य फलम् = साफल्यं यस्मिंस्तत्' इत्युत्तरम् ।

भावार्थ:—जगति लोक: स्वेच्छानुसारं कल्पितानि लाभादिस्वरूपाणि यानि तानि वर्तन्ते, किन्तु नीत्यनुसारं तेषां गुणवत्सङ्गागमादिरूपत्वमेवेति ।

भाषा—लाभ क्या है ? गुणियों का साथ, दुःख क्या है ? मूर्खों का सङ्ग, हानि क्या है ? समय की बरबादी, कुशलता क्या है ? धर्म के रहस्य में अनुराग, वीर कौन है ? इन्द्रियों को जीतनेवाला, प्यारी ( स्त्री ) कौन है ? अनुकूल आचरण करनेवाली, धन क्या है ? विद्या, सुख क्या है ? परदेश में न जाना तथा राज्य क्या है ? आज्ञा की सफलता है ॥ १०३ ॥

'सच्चरिता: सन्त: पृथिव्यां क्वचिदेवोपलभ्यन्त' इत्याशयेनाह—

अप्रियवचनदरिद्रै: प्रियवचनाढ्यै: स्वदारपरितुष्टै: ।
परपरिवादनिवृत्तै: क्वचित्क्वचिन्मण्डिता वसुधा ॥१०४॥

अन्वय:—अप्रियवचनदरिद्रै: प्रियवचनाढ्यै: स्वदारपरितुष्टै: परपरिवादनिवृत्तै: ( सत्पुरुषै: ) वसुधा क्वचित् क्वचित् मण्डिता ( अस्ति ) ।

व्याख्या—अप्रियेति । अप्रियवचनदरिद्रै:, अप्रियाणि = असन्तोषकारीणि परुषाणि मानसोद्वेगकराणीति यावत्, यानि वचनानि = वाक्यानि तै: दरिद्रा: = रहिता: तादृशै:, प्रियवचनाढ्यै:, प्रियाणि = सन्तोषकराणि मधुराणि वचनानि = वाक्यानि तै: आढ्या: = धनिन: पूर्णा इति यावत् । तादृशै:, स्वदारपरितुष्टै: स्वे स्वकीया दारा: = स्त्री, तै: परितुष्टा: = तादृशै: दारशब्द: पुलिङ्गे बहुवचने एव प्रयुज्यते, तथा चाऽमर: 'पुंभूम्नि दारा:' इति, परपरिवादनिवृत्तै: परेषाम् = इतरेषां लोकानां परिवाद: = निन्दा, तस्मात् निवृत्ता: = दूरे स्थिता: पराङ्मुखा इत्यर्थ: । तै:, एवम्भूतै:, सज्जनै: वसुधा = पृथ्वी, 'वसुधोर्वी वसुन्धरा, गोत्रा कु: पृथिवी' इत्यमर: । क्वचित् क्वचिद् = कुत्रचित् कुत्रचित् विरले स्थले, न सर्वत्रेति यावत्, मण्डिता = अलङ्कृता अस्ति । आर्या वृत्तम् ।

भावार्थ:—अप्रियं परुषं वचनं विहाय सर्वत्र मधुरं प्रियमेव वचनं ब्रुवाणा: स्वभार्यानुरक्ता: परनिन्दापराङ्मुखा: सज्जना जगति कुत्रचित् द्वित्रा एवोपलभ्यन्त इति ।

भाषा—अप्रिय ( कठोर ) वचनों के दरिद्र, प्रिय ( मधुर ) वचनों धनी, अपनी स्त्री से तृप्त तथा दूसरों की निन्दा से विमुख सज्जनों द्वा पृथ्वी किसी-किसी स्थान पर अलंकृत है ॥ १०४ ॥

'धीरस्य धैर्यच्युतिर्न कदापि सम्भवती'ति सोदाहरणं दर्शयति—

कदर्थितस्यापि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम्।
अधोमुखस्यापि कृतस्य वह्नेर्नाधः शिखा याति कदाचिदेव ॥१०५॥

अन्वयः—कदर्थितस्य अपि धैर्यवृत्तेः ( पुरुषस्य ) धैर्यगुणः हि प्रमार्ष्टुं शक्यते, अधोमुखस्य कृतस्य अपि वह्नेः शिखा कदाचिद् एव अधः न याति।

व्याख्या—कदर्थितस्यापीति। कदर्थितस्यापि = सन्त्रासितस्य दुर्दशाप्र स्य दुःखिनोऽपि, धैर्यवृत्तेः धैर्येण = चेतोनिर्विकारतारूपेण गुणेन वृत्तिः = व यस्य तादृश्य प्रकृत्या धीरस्येत्यर्थः, धैर्यगुणः = धैर्यं नाम हृद्गतो धर्मः, हि निश्चयेन, प्रमार्ष्टुम् = नाशयितुम्, न शक्यते = न पार्यते, केनापीति शे अत्रार्थे उदाहरण दर्शयति-अधोमुखस्य, अधः = नीचैः प्रदेशे, मुखं = व ज्वालेति यावत् यस्य तादृशस्य, कृतस्यापि = विहितस्यापि, अधोमुखतां नी स्यापीत्यर्थः वह्नेः = अग्नेः शिखा = ज्वाला, 'वह्नेर्द्वयोर्ज्वालकीलावर्चिहे शिखा स्त्रियाम्, इत्यमरः। कदाचिदेव = कस्मिन्नपि समये, एवशब्द अप अधः = नीचैः न याति = न गच्छति। उपजातिर्वृत्तम्।

भावार्थः—प्रयत्नैः क्षणमात्रमधोमुखीकृतस्यापि वह्नेर्ज्वाला कदा यथा नीचैः प्रसर्पति प्रत्युत स्वभावगुणेनोर्ध्वमेव गच्छतीति, तथा प्रकृ धीरो नरः कष्टकरी दशा प्राप्तोऽपि कथमपि धैर्यान्न च्युतो भवति। धैर्य तस्य न कथञ्चिदपि दमयितुं शक्यमिति।

भाषा—हीन दशा में पड़े हुए भी धैर्यशील पुरुष का धैर्य-गुण मिटा नहीं जा सकता, औंधी करके रक्खी हुई आग की भी लपटें कभी नीचे ओर नहीं हो जाती ॥ १०५ ॥

'जगद्विजयिनां धीरस्य लक्षणं' निरूपयति—

कान्ताकटाक्षविशिखा न लुनन्ति यस्य
चित्तं न निर्दहति कोपकृशानुतापः।
कर्षन्ति भूरिविषयाश्च न लोभपाशै-
र्लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥ १०६ ॥

अन्वयः—यस्य चित्तं कान्ताकटाक्षविशिखाः न लुनन्ति, कोपकृशानुतापः न निर्दहति, च भूरिविषयाः लोभपाशैः न कर्षन्ति, सः धीरः इदं कृत्स्नं लोकत्रयं जयति।

व्याख्या—कान्ताकटाक्षेति। यस्य=धीरस्य, चित्तम्=हृदयम् 'चित्तं तु चेतो हृदयम्' इत्यमरः, कान्ताकटाक्षविशिखाः, कान्तायाः=कस्याश्चित्सुन्दर्याः कटाक्षा एव=नेत्रप्रान्तभागतः साकूतानि विलोकनान्येव विशिखाः=बाणाः, न लुनन्ति=न छिन्दन्ति न विध्यन्तीत्यर्थः, कोपकृशानुतापः, कोप एव कृशानु = अग्निः 'कृशानुः पावकोऽनल' इत्यग्निपर्यायेष्वमरः, तस्य तापः=सन्तापः, न निर्दहति=अधिकरूपेण ज्वलयति न सन्तापयतीति यावत्, च=अपि च, भूरिविषयाः बहवः स्रक्चन्दनादयो भोग्यपदार्थाः, लोभपाशैः, लोभ एव=अत्यधिकोऽभिलाष एव पाशाः=बन्धनानि जालानि रज्जव इति यावत् तैः न कर्षन्ति=स्वाभिमुखं न कुर्वन्ति, सः=एतदुक्तलक्षणः, धीरः=धैर्यशीलः पुरुषः, कृत्स्नम्=सकलम्, इदम्=एतत् दृश्यमानम्, जगत्=लोकम्, जयति=वशीकरोति।

वसन्ततिलका वृत्तम्।

भावार्थः—कान्तादीन् विजेता सर्वं जगद्विजेतुं शक्नोतीति। अयमर्थः—नार्यः क्रोधो विषयाश्च यस्य गम्भीरे मनसि विकारं किमपि नोत्पादयितुं प्रभवन्ति, तेन धीरेण पुरुषेण सर्वं जगत् वशीकर्तुं शक्यते, अखण्डितस्य प्रभावो जगति सर्वतो वर्तत इति।

भाषा—जिसके चित्त को सुन्दर स्त्री के कटाक्षरूपी बाण घायल नहीं कर देते, क्रोधरूपी आग की आँच नहीं जलाती तथा नाना प्रकार के विषय-लोभ की रस्सियों से (अपनी ओर) नहीं खींचते, वह धीर पुरुष सम्पूर्ण त्रिलोकी को जीत लेता है॥ १०६॥

'शूरः पुरुषः सर्वानपि दमयितुं शक्नोति' त्युदाहरणेन दृढीकरोति—

एकेनापि हि शूरेण पादाक्रान्तं महीतलम्।
क्रियते भास्करेणेव स्फारस्फुरिततेजसा॥ १०७॥

अन्वयः—हि स्फारस्फुरिततेजसा भास्करेण इव एकेन शूरेण अपि महीतलं पादाक्रान्तं क्रियते।

व्याख्या—एकेनापीति। हि = निःसंदेहम्, स्फारस्फुरिततेजसा, स्फारम्= बहुलं यथा स्यात्तथा स्फुरितम् = विकसितं सर्वत प्रसृतजमिति यावत्, तेजः = प्रकाशः प्रभावो वा यस्य तादृशेन, भास्करेणेव = सूर्येणेव, 'भास्कराहास्कर-ब्रध्नप्रभाकरविभाकराः' इति सूर्यपर्यायेष्वमरः, एकेन = अद्वितीयेन, शूरेणापि = पराक्रमशालिना पुरुषेणापि, महीतलम् = भूपृष्ठम् भूमिष्ठो लोकसमूहश्च, पादाक्रान्तम्, पदैः = किरणैः पादाभ्याम् = चरणाभ्याञ्च, 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः, आक्रान्तम् = व्याप्तं धर्षितञ्च, क्रियते = विधीयते। अनुष्टुप् वृत्तम्।

भावार्थः—प्रकाशेन देदीप्यमानः सूर्यो यथात्मनः किरणैः पृथ्वीं व्याप्नोति तथैव शूरोऽप्येकः प्रभावशाली सकलं लोकं चरणाभ्यामाक्रम्य दासीकृत्य तिष्ठति। शौर्येण गुणेन पुरुषः सर्वं जगद्विजित्य तत्रात्मनः प्रभुत्वं स्थापयतीति।

भाषा—विस्तृत तथा दीप्त प्रकाशवाले सूर्य की भाँति केवल एक वीर पुरुष भी पृथ्वीतल को पादाक्रान्त कर देता है ( सूर्य किरणों से सारी पृथ्वी को व्याप्त कर लेता है और वीर पुरुष लोगों को अपने चरणों से दबाता अर्थात् वश में कर लेता है ) ॥ १०७ ॥

'सकलसम्पादनसमर्थेनैकेन शीलेन गुणेन मनुष्यो विस्मयकराण्यपि कार्याणि कर्तुं पारयती'ति विशदीकरोति—

वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणात्
मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते।
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते
यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥१०८॥

अन्वयः—यस्य अङ्गे अखिललोकवल्लभतमं शीलं समुन्मीलति तस्य (पुरः) वह्निः जलायते, जलनिधिः तत्क्षणात्, कुल्यायते, मेरुः स्वल्पशिलायते, मृगपतिः सद्यः कुरङ्गायते, व्यालः माल्यगुणायते, (तथा) विषरसः पीयूषवर्षायते।

व्याख्या—वह्निरिति। यस्य = यस्य पुरुषस्य, अङ्गे = शरीरे, अखिललोकवल्लभतमम्, अखिलानाम् = सर्वेषां लोकानाम् = जनानां वल्लभतमम् = अतिप्रियम्, 'दयितं वल्लभं प्रिय' मित्यमरः शीलम् = ( सर्वानुकूलः ) स्वभावः सदाचरणविशेषो वा, 'शीलं स्वभावे सद्वृत्ते' इत्यमरः; समुन्मीलति = आकारे-

ङ्गितादिभिः सर्वतः प्रकाशते तस्य=तादृशस्य पुरुषस्य अग्रे वह्निः=अग्निः जलायते=जलमिवाचरति, जलमिव शीतलो भवतीत्यर्थः, जलनिधिः=समुद्रः, तत्क्षणात्=तस्मिन्नेव क्षणे, कुल्यायते=कृत्रिमा स्वल्पा नदीवाचरति, 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः मेरुः=तन्नामा स्वर्णपर्वतः, स्वल्प-शिलायते = अमहत्परिमाणो लघुः पाषाण इवाचरति 'पाषाणप्रस्तरग्रा-वोपलाऽश्मानः शिला' इत्यमरः, मृगपतिः = मृगराजः सिंह, सद्यः= तत्कालम्, कुरङ्गायते=मृग इवाचरति, 'मृगे कुरङ्गवातायुहरिणाऽजिन-योनयः' इत्यमरः व्यालः=सर्पः, 'व्यालः सरीसृप' इति सर्पपर्यायेष्वमरः। माल्यम्=पुष्पाणां मालेवः 'माल्यं मालास्रजा' वित्यमरः, गुणः=रज्जुः अथवा माल्यस्य गुणः=दर्शनीयत्वादिधर्मः, स इवाचरति, विषरसः = गरलद्रवः, 'क्ष्वेडस्तु गरलं विषम्' 'द्रवे रस' इत्यमरौ। पीयूषवर्षायते = अमृतस्य वृष्टिरिवा चरति। सर्वत्र 'जलायते' इत्यादिषु क्यङ्प्रत्ययो वाच्यः। शार्दू-लविक्रीडितं वृत्तम्।

भावार्थः—शीलं नाम सर्वेषां प्रियं वस्तु यत्र विद्योतते स परेषां प्रकृति गुणं स्वरूपञ्च परावर्त्य तत्सर्वं स्वानुकूलं सम्पादयितुं प्रभवति। तत्पुरो वह्ने-र्जलत्वं समुद्रस्य क्षुद्रकृत्रिमनदीत्वं मेरोर्लघुपाषाणत्वं, सिंहस्य मृगस्य, सर्पस्य मालात्वं तथा विषस्यामृतत्वमपि सञ्जायत इति।

भाषा—सारे मनुष्यों का अभीष्टतम ( सबसे अधिक प्यारा ) सदाचार जिस पुरुष के शरीर में विराजमान है उसके लिए आग पानी हो जाती है, समुद्र छोटा नाला हो जाता है, सुमेरु पर्वत तत्काल छोटी-सी चट्टान हो जाता है, सिंह तुरन्त हिरन हो जाता है, साँप माला के समान हो जाता है तथा विष का रस अमृत की वर्षा के तुल्य हो जाता है॥ १०८॥

'प्राणपणेनापि तेजस्विनः स्वां प्रतिज्ञां पालयन्ती'त्येवं 'नरमवक्तव्यं नीति-तत्त्वं दर्शयति—

लज्जागुणौघजननीं जननीमिव स्वा-
मत्यन्तशुद्धहृदयामनुवर्तमानाम्

तेजस्विनः सुखमसूनपि सन्त्यजन्ति
सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥१०९॥

अन्वयः—सत्यव्रतव्यसनिनः तेजस्विनः असून् अपि सुखं सन्त्यजन्ति, लज्जागुणौघजननीम् अत्यन्तशुद्धहृदयाम् अनुवर्तमानां स्वां जननीम् इव प्रतिज्ञां पुनः न ( सन्त्यजन्ति ) ।

व्याख्या—लज्जागुणौघेति । सत्यव्रतव्यसनिनः, सत्यम् = सत्यभाषणमेव व्रतम् = नियमः नियतं कार्यम्, सत्यस्य परिपालनमिति यावत्, व्यसनम् = स्वभावो येषां तथाभूताः अथवा—सत्यव्रते सत्यव्रतपालने व्यसनम् = आसक्तिर्येषाम् तादृशाः तेजस्विनः = प्रभावगुणाशालिनः पुरुषाः, असूनपि = प्राणानपि, सुखपूर्वकम्, क्लेशं विनेति यावत्, सन्त्यजन्ति = उत्सृजन्ति, लज्जागुणौघजननीम्, लज्जागुणाः = धाष्टर्याभावसङ्कोचरूपा गुणाः तेषाम् ओघः = प्रवाहः समूह इति यावत्, तस्य जननीम् = उत्पादिकाम्, अत्यन्तशुद्धहृदयाम्, अत्यन्तम् = अधिकं बहुशुद्धम् = स्वच्छं हृदयम् = अन्तःकरणम् अन्तर्गतो भावश्च यस्याः ताम्, अनुवर्तमानाम्, अनु = पश्चाद् रक्षकरूपेण वर्तमानाम् = स्थिताम् सर्वदा समभावेन स्थितां च, एतादृशगुणशालिनीम्, स्वाम् = स्वकीयाम् जननीमिव = मातरमिव, प्रतिज्ञां = स्वीकृतं विषयम्, पुनः = तु न सन्त्यजन्ति। वसन्ततिलका वृत्तम् ।

भावार्थः—सत्यशीलास्तेजस्विनः पुरुषाः सुखं प्राणहानिमपि स्वीकुर्वन्ति किन्तु धाष्टर्याभावं सदाचारं शिक्षयन्तीं निष्कपटहृदयां रक्षिकां मातरमिव सङ्कोचभावोत्पादिकां शुद्धभावां शरीरेण सह वर्तमानां प्रतिज्ञां न त्यजन्ति । प्रतिज्ञातार्थपालनं तेषां मुख्यं कार्यमिति ॥ १०९ ॥

वर्षे रसाङ्कनन्दक्षमामिते श्रावणे दले कृष्णे ।
सप्तम्यां रविवारे व्याख्येयं पूर्णतां प्राप्ता ॥ १ ॥

ललितार्थाहृतमनसा वेतालाऽनन्तरामविबुधेन ।
गुरुपदशालिन्यायां कलिता ललिताऽस्तु सन्मनस्तुष्ट्यै ॥ २ ॥



इति श्रीवेतालाऽनन्तरामशास्त्रिविरचिता 'ललिता'ख्या व्याख्या समाप्ता।

भाषा—सत्यपालन में लगे हुए तेजस्वी पुरुष प्राणों को भी सुखपूर्वक त्याग देते हैं, किन्तु लज्जा सङ्कोच-रूपी गुणों के समूह को पैदा करने वाली, अत्यन्त निर्मल हृदय तथा भाववाली और रक्षण करनेवाली तथा रहनेवाली अपनी माता के तुल्य प्रतिज्ञा को नहीं छोड़ते ॥ १०९ ॥

जिसने परमपद के लिए छोड़ा सकल परिवार को
नयनाभिरामा कामिनी को, सौख्य के रससार को।
उस प्रणवब्रह्मविचाररत राजर्षि की जय हो सदा
गावें सभी कल्याणमय यश भर्तृहरि का सर्वदा ॥

श्रीविजयशङ्करमिश्रकृत 'बाला' नामक हिन्दी भाषाटीका समाप्त।



# साहित्यदर्पणम्

## 'चन्द्रकला' संस्कृत हिन्दी-व्याख्योपेतम्

व्याख्याकार—पं० शेषराज शर्मा रेग्मी

पूर्वप्रकाशित संस्करणों की व्याख्याएँ प्राचीन शैली से लिखी होने के कारण आधुनिक सहृदयों को रुचिकर प्रतीत नहीं होती थीं। इसी कमी को दूर करने के लिये उत्तररामचरित, मालतीमाधव आदि कतिपय ग्रन्थों के ख्याति-प्राप्त व्याख्याकार ने आधुनिक पठन-पाठन के अनुरूप अनावश्यक विस्तार न कर सुबोध संस्कृत एवं हिन्दी व्याख्या प्रस्तुत की है। व्याख्या में सरलता लाने का भरपूर प्रयास किया गया है। इसकी पाण्डित्यपूर्ण विचारों से ओत-प्रोत समीक्षात्मक विशद भूमिका में ग्रन्थ के गम्भीर अध्ययन एवं शोध के परिणाम उपन्यस्त हैं। संस्कृतेतर परीक्षार्थी छात्रों के लिए तो इसकी हिन्दी व्याख्या ही पर्याप्त है। १-६ परिच्छेद २०-०

# हिन्दी दशरूपक

## ( सावलोक 'विद्वद्विनोदिनी' हिन्दी व्याख्या परिशिष्ट सहित )

व्याख्याकार—सुधाकर मालवीय

इस संस्करण की विशेषता—काशी हिन्दू विश्वविद्यालय के लब्धप्रतिष्ठ विद्वान् डॉ० मालवीय ने सर्वप्रथम आचार्य धनिककृत 'अवलोक' के प्रायः सभी उद्धरणों के आगे उन-उन ग्रन्थों का अध्याय-पाद निर्देशपूर्वक उल्लेख कर दिया है—जहाँ से वे सब उद्धृत किये गये हैं। तदनु पूर्व प्रकाशित संस्करणों की हिन्दी टीकायें जो क्लिष्ट होने के कारण आधुनिक सहृदय छात्रों की रुचि की तुष्टि नहीं कर पाती थीं, उस कमी को दूर करने के लिए व्याख्या में अनावश्यक विस्तार न कर सुबोध व्याख्या प्रस्तुत की है। व्याख्या में अधिकतर ग्रन्थ के गूढ़तम भावों को परिष्कारात्मक टिप्पणी में स्पष्ट कर दिया गया है। जो लेखक के पूज्य पिता कवितार्किक आचार्य रामकुबेर मालवीय जी की ही देन है। अतः छात्रों के लिए यह संस्करण सर्वोपरि संग्रहणीय तथा मननीय है। इस संस्करण की गवेषणात्मक-सुविस्तृत भूमिका तथा विविध परिशिष्ट ( नोट्स ) परीक्षार्थियों के लिए विशेष लाभदायक हैं। १६-०

कृष्णदास संस्कृत सीरीज

१३६

राजर्षिभर्तृहरिविरचितं

# शृङ्गार-शतकम्

पद्य-गद्यात्मक-हिन्दीभाषानुवादविभूषितम्

पद्यानुवादकः

डॉ० देवर्षिसनाढ्य शास्त्री

एम० ए०, पी-एच० डी०, डी० लिट्.

मोरखपुर-विश्वविद्यालयप्राध्यापकः




कृष्णदास अकादमी, वाराणसी

१९९८

प्रकाशक : कृष्णदास अकादमी, वाराणसी
मुद्रक : चौखम्बा प्रेस, वाराणसी
संस्करण : द्वितीय, वि० सं० २०५१
मूल्य : रु० ८-००



पो० बा० नं० १११८
चौक, ( चित्रा सिनेमा बिल्डिङ्ग ), वाराणसी-२२१००१
( भारत )
फोन : ३५२३५८

अपरं च प्राप्तिस्थानम्
चौखम्बा संस्कृत सीरीज आफिस
के० ३७/९९, गोपाल मन्दिर लेन
पो० बा० १००८, वाराणसी-२२१००१ ( भारत )
फोन : ३३३४५८

# विज्ञप्ति

राजर्षि भर्तृहरि-रचित शतकत्रय में 'शृंगारशतक' का स्थान द्वितीय और इस प्रकार मध्यम है–प्रथम नीति, द्वितीय (मध्यम) शृंगार और तृतीय (अंतिम) वैराग्य। मानव-जीवन के भी स्थूलतया तीन भाग हैं--बचपन, जवानी, बुढ़ापा--बाल्य, यौवन और वार्धक्य। महाकवि कालिदास ने इक्ष्वाकु वंशीय नरेशों के विषय में बताया है कि वे बचपन में सीखते थे, यौवन में विषयैषी होते थे और वार्धक्य में मुनि-जीवन स्वीकार। अंत में योग द्वारा देह-त्याग कर देते थे। भर्तृहरि-द्वारा निर्दिष्ट मार्ग भी यही है--बालकों के लिए नीति, तरुणों के लिए शृंगार और सीखे-छके, तृप्त बूढ़ों के लिए वैराग्य।

जैसे जीवन में तारुण्य का महत्त्व है, वैसे ही शृंगार का भी। न केवल शृंगार 'सकलजातिसुलभतयाऽत्यन्तपरिचित' ही है, वह हृद्य भी है, शुचि भी है और उज्ज्वल भी--'यत्किञ्चिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा तच्छृङ्गारेणोपमीयते।'

'शृंग' शब्द से 'आरकन्' प्रत्यय लगाकर शृंगार शब्द की व्युत्पत्ति की गयी है। अभिनवगुप्त ने बताया है कि किसी ने कभी शृंगार शब्द की 'मत्वर्थीयेन' व्युत्पत्ति नहीं की थी, उसका रूप भी आज बिसर गया है। 'आरकन्' प्रत्यय का आरम्भ करके उणादि से शृंगार, भृंगार, वृंदार का निपात किया गया है—'आरकन् हि प्रत्ययोऽत्र आरब्धः।' पता नहीं, पहिले शृंग, शृंगार का क्या अर्थ था, पर अब तो एक आचार्य ने शृंग का अर्थ बताया है 'मन्मथोद्रेक'--मन्मथ देव के पधारने का कारण। अर्थ परंपरा से लोक में प्रसिद्ध होते हैं और उपचार से अन्यत्र भी उनका व्यवहार हो जाता है—'प्रतिशास्त्रसमयानुसारिणोऽपि शब्दास्तद्वृद्धव्यवहारपरम्परया लोके प्रसिद्धा उपचारतोऽन्यत्रापि व्यवह्रियन्ते।' सो शृंगार कामदेव की विलासलीला के रूप में ही आज गृहीत है, उज्ज्वलवेष है।

भरतमुनि के अनुसार प्रायः सब भावों की निष्पत्ति काम से है--'प्रायेण सर्वभावानां कामान्निष्पत्तिरिष्यते।' काम ही इच्छा-गुण-संपन्न हो बहुधा परिकल्पित है--धर्मकाम, अर्थकाम, मोक्षकाम, कामकाम। यह 'कामकाम' 'तृतीय पुरुषार्थवारिधि' है और इसको तारनेवाली नौका है नारी। स्त्री-पुरुष योग काम कहा गया है। नानाशीला सुख की मूल स्त्रियाँ शृंगार-साधना में प्रमुख हैं। 'शृंगारशतक' इसी साधना की व्याख्या करता है। इस साधना में भर्तृहरि की बंदना के अनुसार शिव, ब्रह्म और विष्णु भी सुंदरियों के घरेलू सेवक बन जाते हैं।

तो शृंगार है तो यह जगत् है। यह जगत् सत्य है, मनोरम है, सपने जैसा मोहक है तो शृंगार भी वैसा ही है, यह अनित्य है; भंगुर है तो शृंगार भी। परंतु नलिनी-दल पर दमकता जलबिन्दु क्या मोहक नहीं होता? और राजर्षि इस क्षणभंगुर किन्तु मोहक जीवन सौंदर्य-सागर में एक बार मँझधार में लहरों का निमंत्रण देते हैं। आपका स्वागत। क्या आप तीर पर ही रुके रहेंगे? 'तीर पर कैसे रुकूँ मैं आज लहरों में निमंत्रण!'

देवर्षि सनाढ्य

---

श्रीभर्तृहरिविरचितं

# शृङ्गारशतकम्

## पद्य-गद्यात्मक-हिन्दीव्याख्योपेतम्

---

शंभुस्वयंभुहरयो हरिणेक्षणानां
येनाक्रियंत सततं गृहकर्मदासाः ।
वाचामगोचरचरित्रविचित्रिताय,
तस्मै नमो भगवते कुसुमायुधाय ॥ १ ॥

बना दिये मृगनयनाओं के गृहसेवक जिसने विधि, हरि, भव,
जिसके चित्र चरित का वर्णन वाणी द्वारा पूर्ण असम्भव,
उस कुसुमबाण को बार-बार भगवान् काम को नमस्कार ।

शिव, ब्रह्मा और विष्णु को भी जिसने मृगनयनाओं का निरंतर घरेलू सेवक बना रखा है, और जिसके अनोखे चरित्र का वर्णन वाणी द्वारा संभव नहीं है, ऐसे भगवान् कुसुमसायक कामदेव को नमस्कार ।

(शृंगार में काम की प्रमुखता है, अतः राजर्षि भर्तृहरि ने 'शृंगार-शतक' के आरंभ में काम की वंदना की है ।)

शुभ्रं सद्म विभ्रमा युवतयः श्वेतातपत्रोज्वला
लक्ष्मीरित्यनुभूयते स्थिरमिव स्फीते शुभे कर्मणि ।
विच्छिन्ने नितरामनङ्गकलहक्रीडात्रुटत्तन्तुकं
मुक्ताजालमिव प्रयाति झटिति भ्रश्यद्दिशो दृश्यताम् ॥ २ ॥

स्वच्छ, शुभ्र गृह और युवतियां हास-विलासमयी परिपूर्ण,
आतपत्र-सित-छत्र-धारिणी दीप्तिमती लक्ष्मी संपूर्ण,
जब पर्याप्त कर्म शुभ होते, इनका स्थिर अनुभव होता तब ।

और मनुज के संचित पावन कर्मों का क्षय होता है जब,
कामकेलि में सूत्र टूटने से बिखरे माला के मोती
इधर-उधर सब जा गिरते हैं और नष्ट है माला होती,
उसी भाँति ये सब पल भर में जाने कहाँ चले जाते हैं,
बिखर नष्ट सब हो जाता है, मनुज देखते रह जाते हैं ।।

स्वच्छ सफेद घर, विलासमयी युवतियाँ, शुभ्र धूप से त्राण दिलानेवा छत्र धारण करती दीप्तिमती लक्ष्मी—जब पर्याप्त शुभ कर्म होते हैं, स्थिर रूप में इन सब का अनुभव हो पाता है, और जब पुण्य कर्म नष्ट हो जाते हैं तब सब के देखते ही देखते काम-क्रीडा में धागा टूट जाने से बि मोती की माला के मोतियों के समान यह सब झट चारों ओर बिखर लुप्त हो जाता है।

तावदेव कृतिनां हृदि स्फुरत्येष निर्मलविवेकदीपकः ।
यावदेव न कुरङ्गचक्षुषां ताडयते चपललोचनाञ्चलैः ॥ ३ ॥

विवेकी जन के मन के मध्य तभी तक रहता ज्वलित प्रदीप्त,
सुनिर्मल, कामादिकमलहीन, दीप उज्ज्वल विवेक का दीप्त,
कि जब तक मृगनयना के चपल नयनअंचल से जात समीर ।
बुझा देता है उसको नहीं एक झोंका मधु-गंध-अधीर ॥

विवेकी पुरुषों के हृदय में कामादि के मल से रहित निर्मल यह विवे का दीपक तब तक ही प्रज्वलित रहता है, जब तक मृगनयनाओं के चंचल रूपी आँचल से बुझा नहीं दिया जाता ।

धन्यास्त एव चपलायतलोचनानां
तारुण्यदर्पघनपीनपयोधराणाम् ।
क्षामोदरोपरि लसत् त्रिवलीलतानां
दृष्ट्वाकृतिं विकृतिमेति मनो न येषाम् ॥ ४ ॥

चंचल दीर्घ नयन, यौवन के गर्व-सदृश घन, पुष्ट पयोधर

और सुशोभित त्रिवलिलताओं से सुन्दरतम बना कृश उदर;

सुन्दरियों के ऐसे मोहक रूप मनोहर को निहार कर
जिनका विकृत नहीं होता मन, धन्य-धन्य वे श्रेष्ठ मनुजवर ।।

चंचल और बड़े-बड़े नेत्रों वाली, यौवन के अभिमान-स्वरूप घने और पुष्ट पयोधरों को धारण करती, कृश उदर पर सुशोभित त्रिवली लताओं से युक्त नारियों के आकार को देख कर जिनका मन विकृत नहीं हो जाता, वे ही धन्य हैं ।

भवति वचसि सङ्गत्यागमुद्दिश्य वार्ता
श्रुतमुखरमुखानां केवलं पण्डितानाम् ।
जघनमरुणरत्नग्रन्थिकाञ्चीकलापं
कुवलयनयनानां को विहातुं समर्थः ॥ ५ ॥

विविध वार्ताएँ सुन-सुन कर हो गया जिनका मुख मुखर,
व्यर्थ हो नारि-त्याग की बात किया करते ऐसे बुध-प्रवर ।
बात ही केवल उनकी बात, कहाँ, कब तज पाता संसार
रत्नमणि जटित मेखलायुक्त कमलनयना का जघन-विहार ? ॥

अनेक प्रकार की बातें सुनकर जिनका मुख मुखर हो गया है ऐसे बक-बादी पंडितों की स्त्री-संग को लेकर कहीं ( नारी-त्याग ) बात केवल बात ही है ( उसके अनुसार उनका आचरण नहीं है ) । लाल-रत्नों-जड़ी मेखलाओं से सुसज्जित कमलनयनाओं की जघनस्थली को भला कौन छोड़ सकता है ।

मत्तेभकुम्भदलने भुवि सन्ति शूराः
केचित् प्रचण्डमृगराजवधेऽपि दक्षाः ।
किं तु ब्रवीमि बलिनां पुरतः प्रसह्य
कन्दर्पदर्पदलने विरला मनुष्याः ॥ ६ ॥

गंजों के गंड-विदारक हैं धरती पर वीर अनेक
चंड मृगेंद्र सिंह का वध भी कर सकते हैं कुछ-एक ।
वीरों के संमुख कहता हूँ मैं अतीव आग्रह के साथ,
कामदर्प का दलन कर सके, ऐसे मनुज विरल हैं आज ॥

धरती पर मतवाले हाथियों की गण्डस्थली विदारित करने वाले वीर प्रचंड मृगराज सिंह का वध करने में भी समर्थ कुछ हैं, किंतु मैं बलवानों संमुख अत्यंत आग्रहपूर्वक कहता हूँ कि काम के गर्व को चूर्ण करनेवाले मनु विरल हैं।

स्मितेन भावेन च लज्जया भिया पराङ्मुखैरर्धकटाक्षवीक्षणैः।
वचोभिरीर्ष्याकलहेन लीलया समस्तभावैः खलु बन्धनं स्त्रियः॥ ७॥

मंद स्मित, कर-मुख-संचारण, वदन छिपा लज्जा का भाव,
डरना, छिपा-छिपा लेना मुख, अर्धकटाक्ष नयन मधु हाव।
ईर्ष्याजनित कलह, लीलाएँ, हास-लास मृदु, मधुर वचन,
सुन्दरियाँ इन सब भावों के कारण निश्चय ही बंधन॥

मंद मुसकान, हाथ-मुँह आदि मटकाने का भाव, मुखादि छिपाकर ल प्रकट करना, डर जाना, मुँह फेर लेना, अर्धकटाक्षपूर्वक देखना, मधुर व ईर्ष्याजन्य कलह, लीला-विलास—इन सब भाव चेष्टाओं के कारण नि निश्चयपूर्वक बंधन ही हैं।

एताश्चलद्वलयसंहतिमेखलोत्थ-
झङ्कारनूपुररवाहृतराजहंस्यः।
कुर्वन्ति कस्य न मनो विवशं तरुण्यो
वित्रस्तमुग्धहरिणीसदृशाक्षिपातैः॥ ८॥

चपल, कल कंकण-किंकिणि जात झनझनाती झन-झन झंकार,
नूपुरों का वह मोहक शब्द, हंसिनी भी जाती हैं हार।
डरी, मुग्धा हरिणी के तुल्य नयन से क्षण भर तनिक निहार,
न किसका कर लेती हैं त्वरित तरुणियाँ मन वश में लाचार॥

चंचल, कंगन और किंकिणी से उत्पन्न झंकार और नूपुरों के शब्द से रा हंसिओं को पराजित करने वाली तरुणियाँ डरी, मुग्ध हिरनी के सदृश दृष्टिपात से किसका मन वश में नहीं कर लेती?

सत्यं जना वच्मि न पक्षपाताल्लोकेषु सर्वेष्वपि तथ्यमेतत्।
नान्यन्मनोहारि नितम्बिनीभ्यो दुःखस्य हेतुर्न हि कश्चिदन्यः॥ ९

सुनों मैं कहता सच्ची बात, नहीं यह पक्षपात का कथ्य,
सभी लोकों में सब से बड़ा यही है एक समूचा तथ्य।
न कोई बड़ा दुःख का हेतु, न कोई अधिक मनोहर, रम्य,
नितंबिनि इन सुन्दरियों-तुल्य सकल रस विस्तृत जग के मध्य ॥

हे लोगों, मैं सत्य कहता हूँ—कुछ पक्षपात की बात नहीं, सब लोकों में यह सबसे बडा तथ्य है कि इन नितंबधारिणी नारियों से अधिक न तो कोई मन हरनेहारा है और न दुःख का कारण ही है।

लीलावतीनां सहजाः स्वभावास्त एक मूढस्य हृदि स्फुरन्ति।
रागो नलिन्या हि निसर्गसिद्धस्तत्र भ्रमत्येव मुधा षडङ्घ्रिः ॥ १० ॥

लीला-विलास तो सहज भाव लीला-विलासिनी नारी का,
वह भर देता उल्लास किन्तु अज्ञान, मूर्ख जन के मन में।
होती निसर्गतः सहज सिद्ध लाली तो लाल कमलिनी की,
घूमते फिरते हैं किन्तु व्यर्थ उस पर ये भौंरें मधुबन में ॥

लीलाविलासमयी नारियों की विलास लीला तो उनका सहज, स्वाभाविक भाव है, अनजान मूर्ख पुरुष के हृदय में वे ही लीलाभाव उल्लास भर देते हैं; लाल कमलिनी की लालिमा तो प्रकृतिसिद्ध होती है, भौंरा व्यर्थ ही उस पर भ्रमता रहता है।

सिद्धाध्यासितकन्दरे हरवृषस्कन्धावगाढद्रुमे
गङ्गाधौतशिलातले हिमवतः स्थाने स्थिते श्रेयसि।
कः कुर्वीत शिरः प्रणाममलिनं म्लानं मनस्वीजनो
यद्विस्रस्तकुरङ्गशावनयना न स्युः स्मरास्त्रं स्त्रियः ॥ ११ ॥

कंदराओं में अवस्थित सिद्ध जन, शिव-वृषभ के स्कंध से घर्षित विपट,
और गंगाजल-धुली जिसकी शिला—श्रेय साधन रूप हिमगिरि-गोद है।
फिर भला सिर को झुका करता मलिन कौन संमानी पुरुष संसार में,
यदि न होतीं भीत मृग-छौने सदृश नयन वाली काम-आयुध नारियाँ ॥

जिसकी कंदराओं में सिद्ध जन अवस्थित रहते हैं और जिस पर शिव के वृषभ नंदी के कंधों द्वारा रगड़े गये वृक्ष लगे हुए हैं तथा जिसकी शिलाओं

के तल गङ्गा द्वारा धोये जाते हैं, ऐसे कल्याण के साधन स्वरूप हिमालय पर स्थान होने पर कौन संमानी पुरुष अपने सिर को बिनत कर मलिन करता यदि डरे हुए मृगछौने के समान नयनों वाली सुन्दरियों कामदेव का अस्त्र न होतीं ?

भवन्तो वेदान्तप्रणिहितधियामाप्तगुरवो
विचित्रालापानां वयमपि कवीनामनुचराः ।
तथाप्येतद्ब्रूमो नहि परहितात्पुण्यमधिकं
न चास्मिन् संसारे कुवलयदृशो रम्यमपरम् ॥ १२ ॥

आप तो वेदांत-विनिहित बुद्धि वाले बुधजनों के पूज्य, मानित गुरुप्रवर हैं
और विस्मयकारिणी वार्ता बताते कपिजनों के क्षुद्र हम अनुचर अवर हैं।
कह रहे तो भी कि पर-उपकार जैसा पुण्य कोई भी बड़ा जग में नहीं है
कमलनयना सुंदरीगण से मनोरम अधिक जगती में नहीं कुछ भी कहीं है।

आप वेदांत के प्रति बुद्धि विनिहित रखनेवालों के संमान्य गुरुजन हैं और हम भी आश्चर्यकारक वार्ताएँ बतानेवाले कविजनों के अनुचर हैं, तो भी इतना कहते हैं कि परोपकार से बड़ा कोई पुण्य नहीं है और इस संसार में कमलनयना सुंदरियों से अधिक रमणीय कुछ नहीं है।

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदन्तु ।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरनितम्बिनीनाम् ॥ १३ ॥

परोत्कर्ष के प्रति मत्सरता—हीन भावना का कर त्याग
क्या कर्तव्य महत्त्वपूर्ण है, मन में इसको सोच-विचार।
न हो शास्त्र की मर्यादा का उल्लंघन भी—यह धर ध्यान,
आर्य-प्रवर हमको बताइए—कौन उचित करना व्यापार।
गिरिजाओं के गुरु नितंब—शिखरों का सेवन करना या,
कामोद्रिक्ता मंदहासयुत नारी—के नितंब का भार ?"

हे आर्यजन, दूसरे के उत्कर्ष के प्रति असहनशीलता ( मत्सरता ) को छोड़ कर और आवश्यक कर्तव्य का विचार करके शास्त्र-मर्यादा का उल्लंघन न करते हुए आप यह बतायें कि पर्वतों के नितंबों ( शिखरों ) का

सेवन उचित है अथवा कामोद्रेक के मंद हास से युक्त नितंबवती सुंदरियों के नितंबों ( कटिपुरोभागों ) का ?

किमिह बहुभिरुक्तैर्युक्तिशून्यैः प्रलापै-
र्द्वयमपि पुरुषाणां सर्वदा सेवनीयम् ।
अभिनवमदलीलालालसं सुन्दरीणां
स्तनभरपरिखिन्नं यौवनं वा वनं वा ॥ १४ ॥

व्यर्थ और अयुक्त जग के ये बचन अगणित,
सेव्य दो ही वस्तु नर को सर्वदा समुचित ।
नव्यतम तारुण्य-लीला-लालसा-परिपूर्ण,
कुचकलश के भार से परिखिन्न यौवनपूर्ण ।
नारियों के मदिर यौवन का सुख-भोग,
या कि फिर बन में रमे जा छोड़ सब संयोग ॥

इस संसार में अनेक युक्तिरहित अनर्थक वचनों से क्या लाभ ? पुरुषों को दो का ही सदा सेवन करना उचित है—या तो नूतनतम तारुण्य की लीलामयी लालसा से परिपूर्ण और स्तनों के भार से परिखिन्न सुंदरियों के यौवन का अथवा वन का ।

मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे
कान्तापयोधरतटे रसखेदखिन्नः ।
वक्षो निधाय भुजपञ्जरमध्यवर्ती
धन्यः क्षपां क्षपयति क्षणलब्धनिद्रः ॥ १५ ॥

श्रांत हो रति-रास से, रस-भोग से थक खिन्न,
मत्तगज-गंडस्थलीसम विशद कुंकुम-क्लिन्न ।
प्रियतमा की कुचतटी पर बक्ष निज रख कर,
बाहु-पंजर मध्य सुख से स्थित हुआ क्षण भर ।
नींद लेता है बिता देता निशा सारी,
वह मनुज ही धन्य है आनंद-अधिकारी ।।

वह पुरुष धन्य है, जो रसविलासजन्य श्रांति से खिन्न हुआ मतवाले हाथी

के गंडस्थल के समान विस्तीर्ण कुंकुम से गीले प्रिया के पयोधरों के तट पर वक्ष रख कर प्रियतमा के भुजा रूपी पंजर के मध्य में स्थित हो क्षण भर को नींद लेता रात्रि बिता देता है।

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधुवनमनास्वादितरसम्।
अखण्डं पुण्यानां फलमिव भवद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यत इति ॥ १६ ॥

यह अनसूँघा फूल, अनछिदा नख से यह किसलय कोमल,
यह अनबींधा रत्न, मधुवनो, स्वाद न जिसका लिया अभी।
ऐसा यह निर्दोष रूप है तेरा सकल पुण्य का फल,
इसे भोगने का बड़भागी जाने होगा कौन कभी ? ॥

अनसूँघे फूल, नखों से न छिदे कोमल किसलय, अनबींधे रत्न और जिसके रस का स्वाद अभी नहीं लिया गया ऐसे मधुवन के सदृश, पुण्यों के संपूर्ण फल जैसे आपके निर्दोष रूप का भोगनेहारा न जाने इस संसार में कौन हो सकेगा?

[ यह श्लोक बहुत-थोड़े परिवर्तन ( तृतीय चरण में 'भवद्रूप' के स्थान में 'च तद्रूपं' और चतुर्थ चरण के अन्त में 'इति' के स्थान 'विधिः' ) के साथ कालिदास रचित 'शाकुंतलम्' ( २-१० ) में शकुंतला के रूप पर मोहित दुष्यन्त की उक्ति है। ] पंद्रहवां-सोलहवां—ये दोनों श्लोक निर्णयसागर बंबई ( काव्यमाला ) संस्करण में प्राप्त है।

राजंस्तृष्णाम्बुराशेर्न हि जगति गतः कश्चिदेवावसानं
कोवार्थोऽर्थैः प्रभूतैः स्ववपुषि गलिते यौवने सानुरागः।
गच्छामः सद्म यावद्विकसितनयनेन्दीवरालोकिनीना-
माक्रम्याक्रम्य रूपं झटिति न जरया लुप्यते प्रेयसीनाम् ॥ १७ ॥

नहीं पासका जगमें कोई तृष्णा के सागर का पार,
छोड़ जवानी गयी देह तब राग, संपदा में क्या सार ?
जरा मिटाये जब तक आकर कमलाक्षी प्रेयसि का रूप,
तब तक झटपट अपने घर हम पहुँचे जाते हैं हे भूप ! ॥

